



# Vyasatatparya Nirnaya

व्यास तात्पर्य निर्णय



SRI VANI VILAS PRESS
SRIRANGAM



॥ ओम् ॥

# ॥ व्यासतात्पर्यनिर्णयः ॥

श्रीमद्वेदान्तसिद्धान्तरहस्यार्थप्रकाशनधुरंधरेण

श्रीमदय्यण्णदीक्षितेन

विरचितः ।





श्रीरङ्गस्थ

श्रीवाणीविलासमुद्रायन्त्रालये

संमुद्रितः ।

1910.

# PREFACE.

AMONG the ancient books that are interpreted in diverse ways by the several scholars of different schools of thought, the Brahmasutras of Vyasa finds the foremost place. There is apparently no end of the commentaries written on these Sutras. Nilakantha Sivacharya, Sankaracharya, Ramanujacharya, Madhwacharya, Vallabhacharya—in short, every great scholar in India has tried his best to interpret these sutras in the way best suited to the doctrines of his particular system of philosophy. Not content with this, every scholar has taken great pains to prove that every other interpretation is, to say the least of it, not quite correct. When there is such a conflict of interpretations, the question naturally arises—What was the true intention of the writer of these sutras? What interpretation was meant to be put on them by Vyasa when he composed these sutras? In short, with what system of philosophy in his view did he frame these aphorisms? This question is answered in this book in a critical spirit. The arguments adduced are really worth consideration as coming from an impartial critic. The author appears, from the introductory stanzas, to have been the

disciple of Sri Sridhara Venkatesarya, otherwise known as Ayyaval, who lived at Tiruvasanallore in the Tanjore District and who was a contemporary of the great Yogi Sadasivendra Sarasvati.

My thanks are due to Brahmasri Kunigal Ramasastrigal, Dharmadhikari of Mysore who secured for me two Mss. copies of this work and who kindly went through the proofs as well.

*T. K. Balasubrahmanyam.*





|| श्रीसद्गुरुभ्यो नमः ||

# || व्यासतात्पर्यनिर्णयः ||

---*---

श्रीशाकृतीन्दुमकुटाकृति चोपसेव्य-
मीशात्मकं तदुपसेवितृजीवरूपम् ।
विश्वात्मकं तदुपभोगपदं यदीडे
तद्ब्रह्म सत्यसुखबोधनिजस्वरूपम् ॥

यद्वीक्षाखिललोककिल्बिषतमस्काण्डस्य चण्डद्युतिः
सूक्तिर्यस्य विरक्तिभक्तिभगवद्बोधप्ररोहावनिः ।
ब्रह्मानन्दसुधाब्धिमन्थनगिरिर्यस्योपदेशक्रम-
स्तस्मै श्रीधरवेङ्कटेशगुरवे कुर्वे' णामायुतम् ॥

श्रीवेङ्कटपतेः सूनुरल्पयद्रेरनुजः कवः ।
अप्पयणदीक्षितः कुर्वे व्यासतात्पर्यनिर्णयम् ॥

पक्षपातविनिर्मुक्तैर्वैदिकैर्लौकिकैरपि ।
तत्त्वजिज्ञासुभिस्तत्त्वमस्मिन्ग्रन्थेऽवधार्यताम् ॥

V 1

इह खलु भगवान्नारायणः परमकारुणिकः सकललोकानुग्रहाय व्यासरूपेणावतीर्णः परस्परविरुद्धतया प्रतीयमानवेदान्तवाक्यार्थावबोधासमर्थानां मन्दमतीनां सकलोपनिषन्महातात्पर्यनिर्णयद्वारा परमपुरुषार्थसाधनीभूतपरतत्त्वावधारणाय तत्सूचकानि 'अथातो ब्रह्मजिज्ञासा' इत्यादीनि 'अनावृत्तिः शब्दात्' इत्यन्तानि सूत्राणि प्रणिनाय। तदुक्तं शैव एकादशरुद्रसंहितायाम्— 'स च नारायणस्यांशो भगवान्बादरायणः। दृष्ट्वा मन्दमतीन्मर्त्यान्कृपया परयान्वितः॥ वेदान्तार्थस्तु सर्वेषां नाना भाति न चैकधा। अतस्तेन कथं ब्रह्म जानात्यल्पमतिः पुमान्॥ इति संचिन्त्य मतिमान्पुनः कारुणिकोत्तमः। सूत्रयामास वेदान्तवाक्यार्थं शंकराज्ञया॥' इति। तानि भगवद्व्याससूत्राण्यनतिस्फुटाशयानि भगवत्पादभट्टभास्करश्रीकण्ठाचार्ययादवप्रकाशरामानुजमध्वचित्प्रकाशवल्लभादयो भाष्यकाराः स्वस्वाभिमतार्थपरतया व्याचख्युः। तत्र भगवत्पादानां जीवब्रह्मणोरभेदः स्वाभाविकः पारमार्थिकश्च; भेदस्त्वौपाधिकश्चापारमार्थिक इत्यभिमतार्थः। भट्टभास्कराणां तु जीवब्रह्मणोरभेदः स्वाभाविकः पारमार्थिकश्च; भेदस्त्वौपाधिकोऽपि पारमार्थिक इत्यभिमतार्थः। यादवप्रकाशानां जीवब्रह्मणोः स्वाभाविक एव भेदोऽभेदश्चेति। श्रीकण्ठरामानुजाचार्ययोः स्वा-

भाविक एव जीवब्रह्मणोर्भेदो विशिष्टाद्वैतं चेति; तथापि शिवपरमत्वविष्णुपारम्याभ्यां तन्मतयोर्विशेषः । मध्वाचार्याणां तु जीवब्रह्मणोर्भेद एव स्वाभाविक इति । अत्र 'स्थापयध्वमिमं मार्गं प्रयत्नेनापि हे द्विजाः । स्थापिते वैदिके मार्गे सकलं सुस्थिरं भवेत् ॥ यो हि स्थापयितुं शक्तो न कुर्यान्मोहितो नरः । तस्य हन्ता न पापीयानिति वेदान्तनिर्णयः ॥ यः स्थापयितुमुद्युक्तः श्रद्धयैवाक्षमोऽपि सन् । सर्वपापविनिर्मुक्तः साक्षाज्ज्ञानमवाप्नुयात् ॥ यस्तु विद्याभिमानेन वेदमार्गप्रवर्तकम् । छलजात्यादिभिर्जीयात्स महापातकी भवेत् ॥' इति स्कान्दवचनपर्यालोचनया वेदान्ततात्पर्यविषयीभूतार्थनिर्णयस्यावश्यकर्तव्यत्वेन तन्निर्णयायैदंपर्येण प्रवृत्तस्य व्यासस्य पूर्वोक्तभाष्यकाराभिमतार्थानां मध्ये कस्तात्पर्यविषयीभूतार्थ इति संशये, केवलाद्वैतमेवेति निर्णयः क्रियते ॥

ननु, 'द्वापरे द्वापरे विष्णुर्व्यासरूपी महामुने । चतुर्भिः सह शिष्यैस्तु शंकरोऽवतरिष्यति ॥' इत्यादिपुराणवचनैः श्रीमच्छंकरभगवत्पादानां साक्षाच्छंकरावताररूपत्वावगमेन, 'तामष्टादशधा दृष्ट्वा शंकरः सूतसंहिताम् । चक्रे शारीरकं भाष्यं सर्वश्रुतिमनोहरम् ॥' इत्यादिना तदीयशारीरकभाष्यस्य श्रीमत्सूतसंहितामूलकत्वावगमेन च भगवत्पादाभिमतं केवलाद्वैतमेव

व्यासतात्पर्यविषय इत्यर्थस्यैव प्रामाणिकत्वेन स्फुटं प्रतीयमानतया पुनस्तदवधारणाय ग्रन्थारम्भो व्यर्थ इति चेत्; सत्यम्। तथापि 'अनन्तः प्रथमं रूपं लक्ष्मणस्तु ततः परम्। बलभद्रस्तृतीयश्च कलौ कश्चिद्भविष्यति ॥' इत्यादिना रामानुजाचार्याणां शेषावतारूपत्वावगमेन 'भगवद्बोधायनकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्याः संचिक्षिपुः। तन्मतानुसारेणं सूत्राक्षराणि व्याख्यास्यन्ते—'अथातो ब्रह्मजिज्ञासा' इत्यादितद्भाष्यसंदर्भेण तद्भाष्यस्य बोधायनवृत्तिमूलकत्वावगमेन च रामानुजाचार्याभिमतार्थ एव व्यासतात्पर्यविषय इत्यर्थस्य प्रामाणिकत्वं प्रतीयते। तथा 'प्रथमो हनुमान्नाम द्वितीयो भीमसेनकः। पूर्णप्रज्ञस्तृतीयस्तु भगवत्कार्यसाधकः ॥' इत्यादिना मध्वाचार्याणां वाय्ववतारूपत्वावगमेन, तदीयभाष्यस्य तन्मतप्रसिद्धब्रह्मतर्कमूलरामायणादिमूलकत्वावगमेन च मध्वाचार्याभिमतार्थ एव व्यासतात्पर्यविषय इत्यर्थस्य प्रामाणिकत्वं प्रतीयते। तथा भट्टभास्करयादवप्रकाशश्रीकण्ठचित्सुखचिद्विवरणवल्लभादीनामपि तत्तन्मतप्रसिद्धवचनावगततत्तद्देवतावताररूपत्वेन, तदीयभाष्याणां तत्तन्मतप्रसिद्धप्रमाणमूलकत्वावगमेन च तत्तदभिमतार्था एव व्यासतात्पर्यविषय इत्यर्थस्य च प्रामाणिकत्वं प्रतीयते। तथा च परस्परविरुद्धार्थप्रतिपादका-

नेकभाष्यद्रष्टॄणां मन्दमतीनां व्यासतात्पर्यविषयेऽर्थे संशयसंभवेन तन्निर्धारणायैतद्ग्रन्थारम्भस्योचितत्वेन वैयर्थ्यशङ्कानवकाशः ॥

अत्रैवं सति, विचार्यते—

सूतसंहिताबोधायनवृत्त्यादीनां तन्मूलकभाष्याणां च व्यासतात्पर्यविषयेऽर्थे सर्वेषां प्रामाण्यम्, उताप्रामाण्यम्, अथवैकस्यैव प्रामाण्यमिति। तत्र यदि सर्वेषां प्रामाण्यम्, तदा वस्तुनो नानारूपतापत्तिः। न चैतत्संभवति, विरोधात्। यदि च सर्वेषामप्रामाण्यम्, तदा तादृशभाष्यप्रतिपाद्यभेदाभेदाद्यन्यतमावश्यतात्पर्यकश्रुतिसूत्राणामप्यप्रामाण्यापत्त्या वेदान्तशास्त्रोच्छेदप्रसङ्गः। अत एकस्यैव प्रामाण्यमिति तृतीयकल्पोऽवशिष्यते। तच्च प्रमाणमिदमेवेति केनाप्यवधारयितुं न शक्यते। न च भगवत्पादभट्टभास्करयादवप्रकाशश्रीकण्ठरामानुजमध्वचिद्विवरणवल्लभादिभाष्यग्रन्थान्पर्यालोच्य पूर्वमीमांसान्यायोपोद्बलिततत्तद्भाष्योक्तोपक्रमोपसंहारादिषड्विधतात्पर्यलिङ्गाद्युपेतश्रुतिसूत्रस्वारस्यबलाबलानुसारेणायमेवार्थो व्यासतात्पर्यविषय इत्यध्यवसातुं शक्यत इति तत्प्रतिपादकभाष्यमेव प्रमाणमिति वाच्यम्। उक्ततात्पर्यलिङ्गाद्युपेतश्रुतिसूत्रस्वारस्यबलाबलानुसारेणैव सकलभाष्येषु स्वस्वाभिमतार्थ एव व्यासतात्पर्यविषय इति निर्णी-

तत्त्वेन तत्र विशिष्य बलाबलनिश्चयासंभवात् । न चास्मदादिभिरेव युक्तिश्रुतिस्वारस्यबलाबलानुसारेणायमेवार्थो व्यासतात्पर्यविषय इत्यध्यवसातुं शक्यत इति वाच्यम् । तत्र किं युक्तिमात्रबलेनायमेवार्थो व्यासतात्पर्यविषय इति निर्णयः क्रियत इत्युच्यते, उत श्रुतिमात्रबलेन, श्रुतिसहकृतयुक्तिबलेन वा? नाद्यो ह्यद्यः, विकल्पासहत्वात् । तत्रापि किमुपक्रमोपसंहारादिरूपयुक्त्या व्यासतात्पर्यनिर्णयः क्रियत इत्युच्यते, उतानुमानविशेषरूपयुक्तिमात्रबलेन परतत्त्वस्वरूपं निश्चित्य तद्द्वारा स एवार्थो व्यासतात्पर्यविषय इत्यध्यवसातुं शक्यत इत्युच्यते? नाद्यः; उपक्रमोपसंहारादियुक्तेः श्रुतिसहकारित्वेन तृतीयविकल्पाभेदपर्यवसन्नतया युक्तिमात्रेणेति पक्षस्योत्थितेरेवासंभवात्, अस्य पक्षस्य वक्ष्यमाणतृतीयपक्षदूषणेनैव दूषितप्रायत्वाच्च । न द्वितीयः; 'नैषा तर्केण मतिरापनेया' 'तर्काप्रतिष्ठानात्' 'यत्नेनानुमितोऽप्यर्थः कुशलैरनुमातृभिः । अभियुक्ततरैरन्यैरन्यथैवोपपाद्यते ॥' इति श्रुतिसूत्राभियुक्तवचनैर्वेदान्तैकाधिगम्यपरतत्त्वनिर्णये युक्तिमात्रोपायस्य निराकृतत्वेन तद्द्वारा स एवार्थो व्यासतात्पर्यविषय इत्यध्यवसातुं शक्यत इत्यस्य शशविषाणकल्पत्वात् । नापि द्वितीयः; 'अहं ब्रह्मास्मि' 'तत्त्वमसि' 'अयमात्मा ब्रह्म' 'प्रज्ञानं ब्रह्म' 'आनन्दो

ब्रह्म' 'एकमेवाद्वितीयं ब्रह्म' इत्याद्यभेदश्रुतीनाम्, 'पृथगात्मानं प्रेरितारं च मत्वा' 'द्वा सुपर्णा' इत्यादिभेदश्रुतीनां च तुल्यतया विद्यमानत्वेन श्रुतिमात्रबलेनायमेवार्थो व्यासतात्पर्यविषय इति निर्णयासंभवात् । अत एव पूर्वमेवोदाहृतम् 'वेदान्तार्थस्तु सर्वेषां नाना भाति न चैकधा । अतस्तेन कथं ब्रह्म जानात्यल्पमतिः पुमान् ॥' इति । नापि तृतीयः; उपक्रमोपसंहारादिरूपयुक्तिसहकृतश्रुतिबलेनैव तत्तद्भाष्येषु सकलभाष्यकारैः स्वस्वाभिमतार्थ एव व्यासतात्पर्यविषय इति निर्णीतत्वेन तादृशभाष्यादिग्रन्थान्पर्यालोच्यास्मदाद्यपेक्षया सर्वज्ञैः प्राचीनग्रन्थकारैरपि युक्तिसहकृतश्रुतिबलेन प्रतिवादिवाक्स्तम्भनपूर्वकं सकलजनहृदयंगमतयायमेवार्थो व्यासतात्पर्यविषय इत्यवधारणस्याकृतत्वेन च स्वस्वमतमात्राभिमानसंरम्भविजृम्भितोद्घोषमात्रप्रयोजनैः किंचिज्ज्ञैरस्मदादिभिरेव युक्तिसहकृतश्रुतिबलेनायमेवार्थो व्यासतात्पर्यविषय इत्यध्यवसातुं शक्यत इत्यस्य भ्रान्तिविलसितत्वात् ॥

ननु, एवं सति व्यासतात्पर्यविषयीभूतार्थनिर्णयकुतूहलिनः पुरुषधौरेयस्य प्रभुशिरोमणेः सभामागत्यैकदिनप्रभृति मासावधि द्वैताद्वैतविचारे सति तत्पक्षयोर्मध्य एकस्य प्रामाण्यमिति मध्यस्थमुखेन निश्चित्य तन्मतप्रवेश एवाङ्गीक्रियत इति पत्राव-

लम्बनपूर्वकं समयबन्धनं कृत्वा तत्सभाप्रविष्टमध्यस्थविद्वत्सं-
निधानबलेनास्मदादिभिरेव श्रुतियुक्तिबलस्वारस्यबलाबलानुसारे-
णायमेवार्थो व्यासतात्पर्यविषय इत्यध्यवसातुं शक्यत इति
चेत्, न; उक्तप्रभुरेव दुर्लभः। तल्लाभेऽपि वक्ष्यमाणरीत्या
मध्यस्थस्यैवाभावेन तत्संनिधाने परतत्त्वं निर्णीयत इत्यस्य
प्रतिज्ञामात्रत्वात्। तत्र मध्यस्थत्वं नाम वादिप्रतिवाद्यभिमत-
पक्षद्वयेऽपि स्वपक्षत्वाभिमानशून्यत्वे सति तत्पक्षयोर्बलाबल-
निर्णयकुशलत्वमिति वक्तव्यम्। एतच्च बाह्यमतप्रविष्टानां
संभवतीत्युच्यते, उत कपिलादितन्त्रप्रविष्टानां संभवति, आहो-
स्विद्वेदान्तशास्त्रप्रविष्टानां संभवतीत्युच्यते। नाद्यः; बौद्धार्ह-
तचार्वाकादिबाह्यमतप्रविष्टानां वेदाप्रामाण्यवादित्वेनोपनिषदध्य-
यनाभावप्रयुक्ततद्गतोपक्रमोपसंहारादिषड्विधतात्पर्यलिङ्गस्वार-
स्यबलाबलनिर्णयसामर्थ्याभावेन तेषां मध्यस्थत्वप्रसक्तेरेवाभा-
वात्, वेदाक्षरश्रवणेऽप्यनधिकारिणां तेषां निकटे वेदान्तविचारस्य
प्रत्यवायकरत्वाच्च। तदुक्तं गौतमधर्मे— 'अथहास्य वेद-
मुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रपूरणमुच्चारणे जिह्वाच्छेदो धारणे
शरीरभेदः' इति। न द्वितीयः; कपिलकणादगौतमादि-
मतप्रविष्टानामिदानीं कुत्राप्यदर्शनेन तेषां मध्यस्थत्वकल्पन-
स्याभित्तिचित्रायमाणत्वात्, जीवानेकत्वप्रपञ्चसत्यत्वपरक्षेत्रज्ञ-

भेदवाद्यभिमानेन पक्षपातितया तेषां पूर्वोक्तमध्यस्थत्वस्या-त्यन्तासंगतत्वाच्च । नापि तृतीयः; वेदान्तशास्त्रप्रवर्तकाने-कभाष्यकारमतप्रविष्टेषु भगवत्पादरामानुजमध्वश्रीकण्ठमतच-तुष्टयप्रविष्टानामेव बाहुल्येन विद्यमानतया तेषामपि परस्परवि-रुद्धभेदाभेदाद्यन्यतमकोट्यवलम्बनेन तदुभयवादिसंप्रतिपन्नपूर्वो-क्तमध्यस्थत्वस्य गगनकुसुमायमानत्वात्, वादिप्रतिवादिज्ञान-तारतम्यनिर्णयमात्रप्रयोजनव्यापारे चरितार्थतया तत्त्वनिर्णय-पर्यन्तप्रयोजनव्यापारे तेषां परम्पराप्राप्तगुरूपदिष्टस्वमतहानि-प्रयुक्तदुराग्रहस्य निवारयितुमशक्यत्वाच्च । अत एव 'वादि-दौर्बल्यं विना न मतदौर्बल्यम्' इत्याभाणकोक्तिः संप्रतिपद्यते । तस्माद्युक्तिमात्रबलेन वा, श्रुतिमात्रबलेन वा, युक्तिसहकृतश्रुति-बलेन वा, मध्यस्थविद्वत्संनिधानबलेन वा, तत्तद्वादिमात्रसंप्रति-पन्नकूटसाक्षिवाक्यसदृशसूतसंहिताबोधायनवृत्त्याद्यनुगृहीतभग-वत्पादरामानुजादिभाष्यग्रन्थपर्यालोचनया वा, अयमेवार्थो व्या-सतात्पर्यविषय इति केनाप्यवधारयितुं न शक्यते । तर्हि त्वया वायमेवार्थो व्यासतात्पर्यविषय इति कथमवधार्यत इति चेत्; उच्यते । यथा स्तोत्रभाष्ये हरिहरयोर्मध्ये कस्य सत्त्वाश्रय-त्वमिति संशये सति 'स्यान्नागरद्राविडवेसरं च क्रमेण वै सत्त्वरजस्तमांसि । महीसुरोर्वीपतिवैश्यकाश्च हरिश्च धाता हर

आदिदेवः’ इति मध्यस्थशिल्पशास्त्रवचनबलेन विष्णोरेव सत्त्वाश्रयत्वमिति वेदान्ताचार्येण प्रतिपादितम्; यथा वा चतुर्वेदतात्पर्यसंग्रहे शिवनारायणयोर्मध्ये कस्य नमःशेषित्वमिति संशये सति ‘वज्रिण्या मुद्रया शक्रं पद्मिन्या दर्शयेद्विधिम्। शङ्खिन्या केशवं रुद्रं शिरस्यञ्जलिमुद्रया’ इति मध्यस्थभरतशास्त्रवचनबलमनुसृत्य ‘या शङ्खिनी भवति शंकर वज्रिणी या मुद्रा च या कमलिनी भरतोपदिष्टा। ताभिर्भवन्त्यभिनया विबुधान्तराणां मौलिस्पृशा करपुटाञ्जलिमुद्रया ते’ इत्यनेन शिवस्यैव नमःशेषित्वमिति सुदर्शनाचार्येण प्रतिपादितम्; तद्वदत्रापि पूर्वोक्तभगवत्पादरामानुजाद्यनेकभाष्यकाराभिमतार्थानां मध्ये कस्मिन्नर्थे व्यासतात्पर्यमिति संशये सति तन्निर्णयाकाङ्क्षायामस्मदादीन्प्रति मध्यस्थत्वेन संप्रतिपन्नकपिलकणादगौतमपतञ्जलिजैमिनितन्त्रेषु सूत्रभाष्यवार्तिकवृत्तिग्रन्थेषु पाशुपतपाञ्चरात्रबौद्धार्हतचार्वाकतन्त्रेष्वप्युक्तरीत्या दशसु तन्त्रेषु ‘यावत्परमतं न निराक्रियते तावत्स्वमतमप्रतिष्ठितं भवति’ इति न्यायेन स्वमतस्थापनाय परमतनिराकरणप्रस्तावे कपिलकणादादिभिः केवलाद्वैतमेव व्यासतात्पर्यविषय इति मत्वानूद्य निराकृतत्वेन तदेवाद्वैतं व्यासतात्पर्यविषय इति निर्णीयते। तदुक्तं गौतममहर्षिणा— ‘विप्रतिपत्तौ साक्षिनिमित्ता सत्यव्यवस्था’ इति।

अतस्तत्प्रतिपादकश्रीमत्सूतसंहितामूलकभगवत्पादीयभाष्यमेव प्रमाणमिति पर्यवसितमिति ॥

ननु, जीवानेकत्वप्रपञ्चसत्यत्वपरक्षेत्रज्ञभेदाद्यभिमानेन कपिलकणादगौतमप्रभृतीनां मध्यस्थत्वं नास्तीति पूर्वमुक्त्वा इदानीं तेषामविद्यमानं मध्यस्थत्वमङ्गीकृत्य तदनुवादबलादयमेवार्थो व्यासतात्पर्यविषय इति स्ववचनव्याहतिरिति चेत्, न; कपिलकणादादीनां भेदाभेदप्रतिपादकश्रुत्यर्थविचारे मध्यस्थत्वाभावेऽपि तेषां व्यासमतानुवादतन्निराकरणपूर्वकस्वमतस्थापनाय व्याससिद्धान्तस्यावश्यं ज्ञातव्यत्वेन तत्सिद्धान्ते स्वपक्षत्वाभिमानशून्यत्वेन च व्यासतात्पर्यविषयीभूतार्थविचारे मध्यस्थत्वसंभवेन स्ववचोव्याहतिशङ्कानवकाशात् ॥

न चास्मिन्ग्रन्थे कपिलाद्यनुवादरूपयुक्तिबलेनायमेवार्थो व्यासतात्पर्यविषय इति निश्चयसंभवे कस्यापि भाष्यग्रन्थादौ प्रवृत्तिर्न स्यादिति वाच्यम्। 'तं त्वौपनिषदं पुरुषं पृच्छामि' 'नावेदविन्मनुते तं बृहन्तम्' इत्यादिश्रुत्या षड्विधतात्पर्यलिङ्गाद्युपेतश्रुतिबलेनैव परतत्त्वनिर्णयः कर्तव्य इत्यर्थस्य व्यासतात्पर्यविषयत्वेन तदर्थप्रतिपादकतत्तद्भाष्यग्रन्थपर्यालोचनेनैव तन्निर्णयस्य कर्तव्यत्वे तत्र भगवत्पादभाष्यरीत्या तन्निर्णयो युक्तः, श्रीकण्ठरामानुजमध्वादिभाष्यरीत्या वेति वादिविप्रति-

पत्तिरूपसंशये प्राप्ते, कपिलाद्यनुवादोपोद्धलितभगवत्पादभाष्योक्तोपक्रमोपसंहारादिषड्विधतात्पर्यलिङ्गाद्युपेतश्रुतिबलेनैव तन्निर्णयो युक्त इति सर्वेषां भाष्यग्रन्थादौ प्रवृत्तेः संभवात् । तत्र यथा वेदान्तशास्त्रे 'रचनानुपपत्तेश्च नानुमानम्' इत्याद्यधिकरणेषु भगवता व्यासेन सांख्यमतनिराकरणं कृतम्, तद्वत्सांख्यतन्त्रेऽपि भगवता कपिलेन वेदान्तशास्त्राभिमतकेवलाद्वैतभेदौपाधिकत्वप्रपञ्चानिर्वचनीयत्वाद्यनुवादपूर्वकं निराकरणं कृतम् । तथा हि— सांख्यशास्त्रप्रथमाध्याये 'नाविद्यातोऽप्यवस्तुना बन्धायोगात्' 'वस्तुत्वे सिद्धान्तहानिः' 'विजातीयद्वैतापत्तिश्च' 'विरुद्धोभयरूपा चेत्' 'न तादृक्पदार्थाप्रतीतेः'; तत्रैव 'उपाधिभेदेऽप्येकस्य नानायोग आकाशस्येव घटादिभिः' 'उपाधिर्भिद्यते न तु तद्वान्' 'एवमेकत्वेन परिवर्तमानस्य न विरुद्धधर्माध्यासः' 'अन्यधर्मत्वेऽपि नारोपात्तत्सिद्धिरेकत्वात्' 'नाद्वैतश्रुतिविरोधो जातिपरत्वात्' 'विदितबन्धकारणस्य दृष्ट्या तद्रूपम्' 'नान्धादृष्ट्या चक्षुष्मतामनुपलम्भः' 'वामदेवादिर्मुक्तो नाद्वैतम्' 'अनादावद्य यावदभावाद्भविष्यदप्येवम्' 'इदानीमिव सर्वत्र नात्यन्तोच्छेदः'; पञ्चमाध्याये 'नाविद्याशक्तियोगो निःसङ्गस्य' 'तद्योगे तत्सिद्धावन्योन्याश्रयत्वम्' 'न बीजाङ्कुरवत्सादिसंसारश्रुतेः' 'विद्यातोऽन्यत्वे ब्रह्मबाधप्रसक्तेः'

'अबाधे नैष्फल्यम्' 'अविद्याबाध्यत्वे जगतोऽप्येवम्'; 'तद्रूपत्वे सादित्वम्'; तत्रैव 'नानिर्वचनीयस्य तदभावात्'; तत्रैव 'नाद्वैतमात्मनो लिङ्गात्तद्भेदप्रतीतेः' 'नानात्मनापि प्रत्यक्षबाधात्' 'नोभाभ्यां तेनैव' 'अन्यपरत्वमविवेकानां तत्र' 'नात्माविद्या नोभयं जगदुपादानकारणं निःसङ्गत्वात्' 'नैकस्यानन्दचिद्रूपत्वे द्वयोर्भेदात्'; तत्रैव 'नानन्दाभिव्यक्तिर्मुक्तिर्निर्धर्मत्वात्'; षष्ठाध्याये 'उपाधिश्चेत्तत्सिद्धौ पुनर्द्वैतम्' 'द्वाभ्यामपि प्रमाणविरोधः' 'द्वाभ्यामप्यविरोधान्न पूर्वमुत्तरं च साधकाभावात्' 'प्रकाशतस्तत्सिद्धौ कर्मकर्तृविरोधः' 'जडव्यावृत्तो जडं प्रकाशयति चिद्रूपः' 'न श्रुतिविरोधो रागिणां वैराग्याय तत्सिद्धेः' 'जगत्सत्यत्वमदुष्टकारणजन्यत्वाद्बाधकाभावात्' एतेषु परमतनिराकरणार्थेषु कपिलसूत्रेषु केवलाद्वैतादेरतिस्फुटतया प्रतीयमानत्वेन तादृशवाद्याकाङ्क्षायां व्याससूत्रेषु परस्परविरुद्धार्थप्रतिपादकनानाभाष्यप्रचारेण संशये सति तन्निर्णयाकाङ्क्षायां च सत्यां पतञ्जलिजैमिनिगौतमकणादादिसूत्रकाराणां पाशुपतादितान्त्रिकमतप्रविष्टानां चार्वाकादिबाह्यमतप्रविष्टानां चाद्वैतानभ्युपगमाद्वादित्वासंभवेन पारिशेषिकप्रमाणात्प्रकारान्तरेण तन्निर्णयाकाङ्क्षानिवृत्त्यसंभवाच्च व्यास एव वादित्वेन पर्यवस्यति । इतरथा व्यासमहर्षिं विना यस्य कस्यचिदन्य-

स्याप्रसिद्धस्य वादित्वाभ्युपगमे वाद्यन्तराभिमतकेवलाद्वैतस्य व्यासतात्पर्यविषयत्वाभावेऽपि भट्टभास्करयादवप्रकाशश्रीकण्ठ-रामानुजमध्वादिभाष्यकाराभिमतार्थानां मध्येऽयमेवार्थो व्या-सतात्पर्यविषय इति केनापि निर्णेतुमशक्यत्वेन द्वैतवादिनां स्वपक्षस्थापनाभावप्रयुक्तवैतण्डिकत्वदूषणमापद्येत । तस्मात्तदु-भयाकाङ्क्षाशान्तये व्यास एव वादीत्यकामेनाप्यभ्युपगन्तव्यम् । अयमेवार्थस्तटस्थानां निर्मत्सराणां हृदयंगमः ॥

अत्र केचिद्भेदवादिनः कपिलसूत्रगतकेवलाद्वैतानुवादब्रह्मा-स्त्रप्रतिक्रियां कर्तुमसमर्था अपि परम्पराप्राप्तभेदवासनाकलुषि-तान्तःकरणा निजमताभिमानं परित्यक्तुमनीशाः सन्तः स्वोत्प्रे-क्षाकल्पितयुक्त्याभाससूचीशकलैः केवलाद्वैतानुवादब्रह्मास्त्रं परि-हर्तुमिच्छन्ति । तथा हि—सांख्यशास्त्रानुसारेण केवलाद्वैतं व्या-सतात्पर्यविषय इत्येतदयुक्तम्, सांख्यसूत्राणामभियुक्तग्रन्थेषु कुत्राप्यनुदाहृतत्वेन कपिलोक्तत्वनिश्चयासंभवादिति प्रथमः पक्षः । प्राचीनाद्वैतग्रन्थेषु कपिलसूत्रोक्तेः केवलाद्वैतसाधकयु-क्तित्वेनानुपन्यासादिति द्वितीयः । प्राचीनकपिलमहर्षिणा-र्वाचीनव्यासप्रणीतसूत्रतात्पर्यविषयार्थस्यानुवादासंभवादिति तृ-तीयः । उदाहृतसूत्रेषु कुत्रापि व्यासशब्दप्रयोगाभावेन व्यास-मतमनूद्यत इत्यस्यार्थस्य गगनकुसुमायमानत्वादिति चतुर्थः ।

सांख्यसूत्रानूदितार्थस्य केवलाद्वैतादेर्वेदान्तसूत्रेषु क्वाप्यप्रतीयमानत्वेन प्रत्यभिज्ञाभावादिति पञ्चमः । यदि कपिलस्य व्यासमतनिराकरणमवश्यं कर्तव्यं स्यात्तदा 'ईश्वरासिद्धेः' इत्यादिसूत्रेषु व्यासाभिमतजगत्कारणीभूतेश्वरादिनिराकरणमात्रेण चरितार्थतया केवलाद्वैतानुवादसूत्राणामपि व्यासाभिमतार्थानुवादपरत्वमेव कल्पनीयमिति निर्बन्धाभावादिति षष्ठः । केवलाद्वैतवादिनः कस्यचिदभावेऽपि सांख्यसूत्रेषु स्वमतस्थापनाय स्वोत्प्रेक्षितपक्षतयाद्वैतमनूद्य तन्निराकरणसंभवादिति सप्तमः । तदानींतनस्य यस्य कस्यचित्केवलाद्वैतवादिनो मतमनूद्य तन्निराकरणसंभवादित्यष्टमः । सूतसंहिताविष्णुपुराणादिप्रसिद्धसूतजडभरतादीनां केवलाद्वैतवादिनां मतस्य निराकरणसंभवादिति नवमः । व्याससूत्रेषु 'तदनन्यत्वमारम्भणशब्दादिभ्यः' इत्यादिनापातप्रतिपन्नाद्वैतानुवादोपपत्तेरिति दशमः । 'आत्मेति तूपगच्छन्ति ग्राहयन्ति च' इत्यादिसूत्रानुसारेण केवलाद्वैतमेव व्यासतात्पर्यविषय इति भ्रान्तिमता कपिलेन तदनुवादसंभवादित्येकादशः । सर्वज्ञेन कपिलेन भाविशंकराचार्याभिमतकेवलाद्वैतादेरनुवदितुं शक्यत्वादिति द्वादशः । वेदान्त्येकदेशिनामाश्मरथ्यौडुलोमिकाशकृत्स्नबादरीणां मध्ये यस्य कस्यचिन्मतमनूद्य तन्निराकरणसंभवादिति त्रयोदशः पक्षः । तस्मा-

दुदाहृतसूत्रेषु केवलाद्वैतानुवादादेरन्यथोपपन्नतया व्यास एव वादित्वेन पर्यवस्यतीत्युक्तेरयुक्तत्वेन केवलाद्वैतमेव व्यासतात्पर्यविषय इत्युद्घोषोऽयमभित्तिचित्रायमाण इति ॥

अत्रोच्यते— यदुक्तं सांख्यसूत्राणामभियुक्तग्रन्थेषु कुत्राप्यनुदाहृतत्वेन कपिलोक्तत्वनिश्चयासंभवादिति; तदयुक्तम् । श्रीमत्सूतसंहिताव्याख्यायां तात्पर्यदीपिकायां विद्यारण्यगुरुचरणैः—अत एव सांख्यैरुच्यते 'सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः' इत्यादिना, परिमलग्रन्थे 'आनुमानिकमप्येकेषाम्' इत्यधिकरणेऽप्पय्यदीक्षितचरणैः— अत एव 'स्थूलात्पञ्चतन्मात्रस्य' इत्यादीनि ,संहतपरार्थत्वात्पुरुषस्य' इत्यन्तानि कपिलसूत्राणि इत्यादिना, पुरुषार्थरत्नाकरेऽपि बालकृष्णानन्दचरणैः– मोक्षस्तु लक्षितः सांख्यैः 'अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः' इत्यादिना कपिलसूत्राणामुदाहृतत्वात् । न चोक्तरीत्या कपिलसूत्रसद्भावेऽपि त्वदुदाहृतकेवलाद्वैतानुवादसूत्राणां न कपिलोक्तत्वसिद्धिरिति वाच्यम् । कपिलसूत्रव्याख्यातृभिरनिरुद्धाचार्यादिभिरेव 'अथ त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः' इत्यारभ्य 'यद्वा तद्वा तदुच्छित्तिः पुरुषार्थः' इत्यन्तानां सर्वेषां सूत्राणां व्याख्यातत्वेन तन्मध्यपतितानामुदाहृतसूत्राणामपि कपिलप्रणीतत्वे विवादाभावात् । द्विती-

यपक्षोऽपि न क्षोदक्षमः । अस्मद्भाष्यादिप्राचीनग्रन्थेषु गौतमकपिलादिसूत्रकाराणामेव प्रतिवादित्वेन लक्ष्यतया तन्मतनिराकरणप्रवृत्तानां भाष्यकारादीनामाधुनिकभेदवादिनिराकरणार्थकपिलानुवादयुक्तिपर्यन्तानुधावनानपेक्षणात्, अप्पय्यदीक्षितचरणादिग्रन्थकाराणां तु स्वसमानयुक्तिप्रमाणोपन्याससमर्थभेदवाद्यसंभवादेव कपिलसूत्रानुवादरूपप्रबलयुक्तिमनपेक्ष्यैव परमतनिराकरणसंभवात्, प्राचीनग्रन्थेष्वनुदाहरणमात्रेण सांख्यानुवादस्य केवलाद्वैतसाधकयुक्तित्वं न संभवतीत्येतस्य मूर्खप्रलपितत्वाच्च। तृतीयोऽपि न मनोज्ञः । व्यासकपिलादीनां प्रतिकल्पं लोकानुग्रहार्थमवतीर्णानां प्राचीनार्वाचीनत्वविभागाभावेन स्वस्वमतस्थापनाय परस्पराभिमतार्थानुवादोपपत्तेः । चतुर्थपक्षोऽप्यसंगतः । कपिलसूत्रेषु केवलाद्वैतनिराकरणस्थले वाद्यन्तराभावेन व्यास एव केवलाद्वैतवादीत्यवगन्तुं शक्यतया तत्र व्यासशब्दप्रयोगेणापि भवितव्यमित्यत्र नियामकाभावात् । इतरथा वेदान्तसूत्रेषु 'ईक्षतेर्नाशब्दम्' इत्यादिषु सांख्यमतनिराकरणेऽपि कपिलशब्दप्रयोगापत्तेः । अत एव पञ्चमोऽकिंचित्करः । कपिलसूत्रगतकेवलाद्वैतवाद्यभिमतार्थानुवादबलेनैवाद्वैतं व्यासतात्पर्यविषय इति निश्चयसंभवे वेदान्तसूत्रेषु तत्प्रत्यभिज्ञाया अनपेक्षितत्वात्प्रत्यभिज्ञाभावेऽद्वैतमेव व्यासतात्प-

र्थविषय इति कथमध्यवसीयत इति चेत् भ्रान्तोऽसि ; अन्यस्याद्वैतवादिनोऽभावादेव व्यास एवाद्वैतवादीत्युक्तत्वात् । यदि च वेदान्तसूत्रेष्वतिस्फुटतयाद्वैतादिकमेव प्रत्यभिज्ञायेत, तदा त्वदीयभाष्यादिग्रन्थारम्भासंभवेन त्वद्बुद्धिपरिकल्पितविरुद्धशङ्काङ्कुरोन्मेषानवकाशः । अस्ति च भेदौपाधिकत्वाद्यंशे प्रत्यभिज्ञा ब्रह्मसूत्रेषु । 'उपाधियोगेऽप्येकस्य नानायोग आकाशस्येव यथा घटादिभिः' इत्यादिकपिलसूत्रैरनूद्यमानस्यौपाधिकभेदस्य 'अत एव चोपमासूर्यकादिवत्' 'आभास एव च' इत्यादिसूत्रेषु प्रतीयमानत्वात् । 'नात्माविद्या नोभयं जगदुपादानकारणं निःसङ्गत्वात्' इति कपिलसूत्रेण निराक्रियमाणस्य ब्रह्मगतजगदुपादानत्वस्य 'जन्माद्यस्य यतः' 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' इति सूत्रद्वये प्रतीयमानत्वाच्च । ननु, अनेन सूत्रेण निराक्रियमाणस्य प्रकृतिविशिष्टब्रह्मगतजगदुपादानत्वस्य श्रीकण्ठरामानुजादिमतसाधारणत्वेन कथं केवलाद्वैतवाद्यभिमतजगदुपादानत्वस्यैवेयं प्रत्यभिज्ञेति चेत्, उच्यते । तस्मिन्सूत्रे केवलात्मा जगदुपादानम्, उताविद्या, तद्विशिष्टात्मा वेति त्रिधा विकल्प्य तन्निराकरणप्रस्तावेऽविद्याजगदुपादानत्वनिराकरणपक्षेऽवस्तुभूताविद्यैवाविद्याशब्दार्थ इति वक्तव्यम्; इतरथा रामानुजाद्यभिमतनित्यप्रकृतिपरत्वे सांख्यैरपि तादृशप्र-

कृतेरेव जगदुपादानत्वाभ्युपगमेन तन्निराकरणे स्वसिद्धान्तोच्छेदप्रसङ्गात्, 'नाविद्यातोऽप्यवस्तुना बन्धायोगात्' इति प्रथमाध्यायसूत्रगताविद्याशब्दस्यावस्तुभूताविद्यापरतया निर्णीतत्वेन तत्प्रत्यभिज्ञानेन एतत्सूत्रगताविद्याशब्दस्याप्यवस्तुभूताविद्यापरत्वौचित्याच्च। तथा च अवस्तुभूताविद्याविशिष्टब्रह्मगतजगदुपादानत्वनिराकरणस्यैवात्र वक्तव्यतया तस्य च जगदुपादानत्वस्य रामानुजादिमतसाधारणत्वाभावेन केवलाद्वैतवाद्यभिमतजगदुपादानत्वस्यैव पूर्वोक्तवेदान्तसूत्रद्वयेऽपि प्रत्यभिज्ञाने न विवाद इति। नापि षष्ठो गरिष्ठः। 'ईश्वरासिद्धेः' इत्यादिकपिलसूत्रैर्निराक्रियमाणस्येश्वरादेर्गौतमादिमतसाधारणत्वेन तेषां सूत्राणां व्यासमतमात्रनिराकरणपरत्वासंभवात्, तत्सूत्राणां नैय्यायिकाभिमतमात्रनिरासपरत्वाच्च। अत एव अनिरुद्धवृत्तौ नैय्यायिकाभिमतखण्डनाभिप्रायेणैव 'ईश्वरासिद्धेः' इत्यादिसूत्राणि व्याख्यातानि। केवलाद्वैतानुवादपरेष्वनेकेषु कपिलसूत्रेषु वाद्यन्तराभावेनासाधारण्येनावश्यकर्तव्यव्यासमतनिराकरणसंभवे मतान्तरसाधारणार्थनिराकरणपरैः 'ईश्वरासिद्धेः' इत्यादिसूत्रैरेव व्यासमतनिराकरणचरितार्थत्वकल्पनस्यायुक्तत्वाच्च। नापि सप्तमः। 'वस्तुत्वे सिद्धान्तहानिः' इति सूत्रे कस्यचिद्वादिनः सिद्धान्तं सिद्धवत्कृत्यैव तन्मतनिराकरणस्य प्रतीयमानत्वेनोत्प्रेक्षितपक्षमादाय

तन्निराकरणायोगात् । अष्टमोऽपि दुष्टः । तदानींतनः केवलाद्वैतवादीत्युक्ते, स महर्षिर्वा, अन्यो वा? नाद्यः । यदि महर्षिस्तदा कपिलकणादादिमतवत्तदीयमतस्यापि गुरुशिष्यपरम्परया प्रचारावश्यंभावेन खिलत्वानुपपत्तेः । न द्वितीयः । अन्यः केवलाद्वैतवादी कश्चिदप्रसिद्धोऽस्तीत्यत्र मानाभावात्, प्रसिद्धं व्यासमहर्षिं परित्यज्याप्रसिद्धाद्वैतवादिगवेषणासंभवाच्च । नवमोऽप्यवमः । सूतजडभरतादीनां स्वातन्त्र्येण तन्त्राप्रवर्तकतया सांख्यतन्त्रप्रवर्तककपिलप्रतिवादित्वासंभवेन तन्मतनिराकरणानुपपत्तेः । किं च तेषां वादित्वाभ्युपगमे श्रीमत्सूतसंहिताविष्णुपुराणादीनां त्वयैव केवलाद्वैतपरत्वस्य साधनीयत्वेन तत्समानार्थकवेदान्तानामपि केवलाद्वैतपरत्वस्य सिद्धतयास्मदिष्टसिद्धेः । उक्तरीत्या केवलाद्वैतप्रतिपादकस्य विष्णुपुराणादेर्भेदपरत्वव्यवस्थापकानां भवद्भाष्यकारप्रभृतीनां त्वयैव भ्रान्तिकल्पनेन त्वदनिष्टप्रसङ्गश्च । दशमो विषमः, विकल्पासहत्वात् । आपातप्रतिपन्नकेवलाद्वैतनिराकरणाभ्युपगमेऽनूद्यमानं केवलाद्वैतं व्यासस्य पूर्वपक्ष इत्युच्यते, सिद्धान्त इति वा । नाद्यः ; 'वस्तुत्वे सिद्धान्तहानिः' इति व्यासं प्रति कपिलदूषणासामञ्जस्यात्, व्याससिद्धान्तनिराकरणाय प्रवृत्तेन कपिलेन तत्पूर्वपक्षनिराकरणायोगाच्च । द्वितीये इष्टापत्तिः । नाप्येकादशः । स्वमतस्थापनाय परमतनि-

राकरणप्रस्तावे सकलतन्त्रसिद्धान्तार्थनिर्णयजागरूकस्य सर्वज्ञस्य कपिलस्येतरमतानुवादांशेऽभ्रान्तस्य व्यासमतानुवादांशमात्रे भ्रान्तिकल्पनस्य भ्रान्तिमूलकत्वात्। नापि द्वादशः। गौतमकणादप्रभृतिसूत्रकारमतनिराकरणप्रायपाठानुरोधेन व्यासमतनिराकरणस्यैवोचितत्वेन तद्भाष्यकृद्भाविशंकराचार्यमतनिराकरणस्यासंगतत्वात् । इतरथा रामानुजमध्वश्रीकण्ठादिभाष्यकृन्मतानामपि निराकरणीयत्वप्रसङ्गः । न हि सांख्यसूत्रेषु रामानुजादिभाष्यकाराभिमतविशिष्टाद्वैतादिनिराकरणं क्वाप्युपलभ्यते । अस्तु वा भाविशंकराचार्यपक्षनिराकरणम्; तथापि नानुपपत्तिः। व्यासतात्पर्यनिर्णयैदंपर्येण प्रवृत्तानां भाष्यकाराणां मध्ये विशिष्य भगवत्पादपक्षमेव लक्ष्यीकृत्य निराकरणदर्शनेन तदभिमतकेवलाद्वैतमेव व्यासतात्पर्यविषय इत्यवधार्यत इति सिद्धं नः समीहितम् । नापि वेदान्तैकदेशिनामाश्मरथ्यौडुलोमिकाशकृत्स्नबादरीणां मध्ये यस्य कस्यचिन्मतमनूद्य तन्निराकरणसंभवादिति त्रयोदशः । स्वतन्त्रतन्त्रप्रवर्तकगौतमकणादादिमतनिराकरणप्रायपाठे प्रधानमल्लनिबर्हणन्यायेन वेदान्ततन्त्रप्रवर्तकव्यासमतस्यैव निराकरणीयत्वौचित्येन तदेकदेशिभूताश्मरथ्यादिमतनिराकरणस्यान्याय्यत्वात्; अन्यथा 'ईक्षतेर्नाशब्दम्' इत्यादिसूत्रेषु सांख्यमतनिराकरणस्थलेऽपि तदेकदेश-

भूतपञ्चशिखसनन्दनाचार्यादिमतानामेव निराकरणीयत्वापत्तेः। न चेष्टापत्तिः। सकलभाष्येषु कपिलमतमेव लक्ष्यीकृत्य तन्मतनिराकरणदर्शनेन तद्विरोधापत्तेः। यदि च कपिलोक्तकेवलाद्वैतमतनिराकरणपरसकलसूत्राणां वेदान्तैकदेशभूताश्मरथ्यादिमतनिराकरणपरत्वम्, तदा तत्र व्यासमतनिराकरणाभावात् 'यावत्परमतं न निराक्रियते तावत्स्वमतमप्रतिष्ठितं भवति' इति न्यायेन कपिलस्य स्वसिद्धान्तासिद्धिप्रसङ्गः। किं च। आश्मरथ्यादीनां मध्ये कस्य मतं निराक्रियते? न तावदाश्मरथ्यस्य 'वाक्यान्वयात्' इत्यधिकरणे भगवत्पादश्रीकण्ठरामानुजभाष्येषु 'प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः' इति सूत्रव्याख्याने जीवब्रह्मणोः कार्यकारणभावप्रयुक्तस्वाभाविकभेदाभेद एव आश्मरथ्याभिमत इति प्रतिपादनेन श्रुतप्रकाशिकायामयं यादवपक्षोऽस्मिन्सूत्रे उपन्यस्तः। तत्र हि 'कार्यात्मना कारणात्मना च जीवब्रह्मणोर्भेदाभेदौ स्वाभाविकौ मतौ' इत्यादिना तदभिमतस्वाभाविकभेदाभेदस्य स्पष्टतया प्रतिपादनेन च तादृशस्वाभाविकभेदाभेदवादिनं प्रति 'उपाधियोगेऽप्येकस्य नानायोग आकाशस्येव यथा घटादिभिः' इत्यादिनौपाधिकजीवमनूद्य 'एवमेकत्वेन परिवर्तमानस्य न विरुद्धधर्माध्यासः' इत्यादिना तन्निराकरणस्यानुचितत्वात्। अत एवौडुलोमिमत-

निराकरणपरमेतदित्यपि निरस्तम् । तस्मिन्नेवाधिकरणे 'उत्क्र-मिष्यत एवंभावादित्यौडुलोमिः' इति सूत्रस्वारस्यपर्यालोचनया मुक्तेः पूर्वं स्वाभाविकभेदः मुक्त्यनन्तरं स्वाभाविको भेदश्च औडुलोम्यभिमत इत्यस्य प्रतिपादनेन तं प्रति 'एवमेकत्वेन—' इत्यादिसूत्रोक्तोपाधिभेदनिराकरणस्यानवकाशात् । अयं चार्थो भाष्यादिग्रन्थेषु स्पष्टः । तत्र रामानुजभाष्ये— अस्य जीवात्मन उत्क्रान्तेः पूर्वमनेवंभावः किं स्वाभाविकः, उतौपाधिकः; तत्रापि पारमार्थिकः, अपारमार्थिको वेति इत्यादिना विकल्प्यौडुलो-मिमतं निराकृतम् । श्रुतप्रकाशिकायां तु— संभावितपक्षयोः पराभिमतं परिशेषयितुं स्वाभाविकौपाधिकविकल्पः कृतः । शंकरभास्करोक्तपक्षद्वयस्यापि 'उत्क्रमिष्यतः—' इत्येकेनैव सू-त्रेण निराचिकीर्षितत्वज्ञापनाय पारमार्थिकापारमार्थिकविकल्पः कृत इत्यादिनौपाधिकभेदद्वयमपि भगवत्पादभट्टभास्कराभि-मतमिति स्थापनेन परिशेषात्स्वाभाविकभेद एवौडुलोमिसिद्धान्त इति तस्य भाष्यस्य तात्पर्यं स्पष्टीकृतम् । अत एव असद्भगव-त्पादभाष्येऽप्युक्तम्—औडुलोमिपक्षे स्पष्टमेवावस्थान्तरापेक्षौ भे-दाभेदाविति । वाचस्पत्येऽपि— जीवोऽपि परमात्मनोऽत्यन्ता-भिन्न एव । स तु देहेन्द्रियमनोबुद्ध्युपाधिसंपर्कात्सर्वदा कलुषः तस्य ज्ञानध्यानादिसाधनसंपन्नस्य देहेन्द्रियसंघातादुत्क्रमिष्यतः

परमात्मनैक्योपपत्तेरिति । कल्पतरुग्रन्थेऽपि— उपाधिसंपर्को हेतुः कालुष्ये, न जीवपरभेद इति । अनेन भाष्यवाचस्पत्य-कल्पतरुग्रन्थपर्यालोचनेनौडुलोमिमते मुक्तेः पूर्वं स्वाभाविको भेदः, तदनन्तरमभेद इति स्पष्टीकृतम् । शिवार्कमणिदीपि-कायामपि संसारदशायां जीवस्य परमेश्वराद्भेदेऽपि मोक्षदशायां तद्भावप्राप्तेर्जीवशब्दैः परमेश्वराभिधानमित्यौडुलोमिमतमिति सूत्रं व्याचष्टे उत्क्रमिष्यत इत्यादिनावस्थाभेदे स्वाभाविकभे-दाभेद एवौडुलोम्यभिमत इति प्रतिपादितम् । तस्मादौडुलोमिं प्रति कपिलोक्तदूषणानवकाशः । नापि काशकृत्स्नस्य । तत्र श्रीकण्ठरामानुजभाष्यरीत्या तन्मतमनूद्यत इत्युच्यते, अस्मद्भ-गवत्पादभाष्यरीत्या वा? नाद्यः । तस्मिन्नेवाधिकरणे 'अव-स्थितेरिति काशकृत्स्नः' इति सूत्रे श्रीकण्ठरामानुजभाष्ययोः काशकृत्स्नस्य तदभिमतविशिष्टाद्वैतवादित्वप्रतिपादनेन तं प्रति पूर्वोक्तकपिलदूषणानवकाशात् । तदुक्तं श्रीकण्ठभाष्ये— सर्व-श्रुतिसामरस्यविचारे सर्वेषां चिदचिद्वस्तूनामन्तर्यामितयानुप्रवि-ष्टः सर्वशरीरः सर्वशब्दवाच्यः परमेश्वरः शिव इति विज्ञायते । अतः काशकृत्स्नमतमेव सर्वश्रुतिसूत्रमहाभियुक्तसंमतमिति । तथा रामानुजभाष्येऽपि स्वशरीरभूते जीवात्मन्यात्मतयावस्थितेः जीवशब्देन ब्रह्मप्रतिपादनमिति काशकृत्स्नाचार्यो मन्यते स्म ।

जीवशब्दश्च जीवस्य परमात्मपर्यन्तस्यैव वाचको न जीवमात्र-स्येतीति। न द्वितीयः। यद्यप्यसद्भगवत्पादभाष्यरीत्या काश-कृत्स्नः केवलाद्वैतवाद्येवेति तं प्रति पूर्वोक्तकपिलदूषणं सावका-शमेव, तथापि काशकृत्स्नमतमेव व्यासमतमिति सकलभाष्य-कारसंमतत्वेन तन्मतनिराकरणे व्यासमतस्यैव निराकृतत्वसिद्ध्या व्यासः केवलाद्वैतवादीति सिद्धं नः समीहितम्। मध्वभाष्ये तु कृष्णद्वैपायनमतादेकदेशविदः परे वदन्ति यथाप्रज्ञं न विरोध इत्यादिना आश्मरथ्यौडुलोमिकाशकृत्स्नानां भेदवादित्वाङ्गी-कारेण कपिलोक्तदूषणप्रसक्तेरेवाभावान्न तेषां वादित्वकल्पना। नापि बादरिमतनिराकरणं भगवत्पादश्रीकण्ठरामानुजमध्वभा-ष्येषु 'अभावं बादरिराह ह्येवम्' इतिसूत्रव्याख्याने मुक्तिद-शायां देहेन्द्रियाद्यभावमात्रस्यैव बादर्यभिमतत्वप्रतिपादनेन के-वलाद्वैतस्याप्रतिपादनात्। न हि शरीराभावप्रतिपादनमात्रेणा-भेदः सिध्यति; तथा सति नैय्यायिकादीनामपि मुक्तिदशायां तदीयग्रन्थेषु शरीराभावप्रतिपादनेन जीवब्रह्मणोरैक्याभ्युपगमा-पत्तेः। तथा च तं प्रति कपिलोक्तदूषणमसमञ्जसमेव। तस्मा-दुक्तरीत्या कपिलसूत्रेषु केवलाद्वैतादेरतिस्फुटतया प्रतीयमानत्वेन तेषामन्यथयितुमशक्यत्वात्, तादृशाद्वैतवाद्यन्तराभावात् अ-स्मिंस्तन्त्रे तन्त्रान्तरेषु वा यत्र कुत्रचिद्भेदवादित्वेन व्यासमहर्षि-

मुररीकृत्य तदभिमतभेदानुवादपूर्वकनिराकरणपरसूत्राणामभावात् व्याससूत्रेषु महता प्रयत्नेन असाधारण्येन कपिलमेव लक्ष्यीकृत्य तन्मतनिराकरणेन तद्वत्कपिलसूत्रेष्वपि व्यासमेव लक्ष्यीकृत्य तन्मतस्य निराकरणीयत्वावश्यंभावाच्च व्यास एव वादित्वेन पर्यवस्यतीति सुष्ठूक्तमिति ।

तथैवानिरुद्धवृत्तावपि प्रथमाध्याये— एक आत्मेति वेदान्तिनः । तथा च 'नित्यः सर्वगतो ह्यात्मा कूटस्थो दोषवर्जितः । एकः सन्भिद्यते भ्रान्त्या मायया न स्वभावतः' इत्यादिना श्रीमत्सूतसंहितावचनोपष्टम्भपूर्वकमात्मैकत्वं वेदान्त्यभिमतमिति प्रतिपादितम् । तत्रैव पञ्चमाध्याये— शुक्तिरजतादिष्वनिर्वचनीयत्वमेव वेदान्त्यभिमतमिति ज्ञापयितुम् 'नानिर्वचनीयं तदभावात्' इति सूत्रावतारिकायां वेदान्तिमतं दूषयति इत्युक्तम् ।

किं च यथा वेदान्तशास्त्रे 'महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्' इत्यधिकरणे भगवता व्यासेन कणादमतनिराकरणं कृतम्, तद्वद्वैशेषिकतन्त्रेऽपि भगवता कणादेन व्यासाभिमतकेवलाद्वैतमेव निराकृतम् । तथा हि वैशेषिकतन्त्रे तृतीयाध्याये द्वितीयाह्निके स्वसिद्धान्ते आत्मनो लिङ्गगम्यत्वं प्रतिपाद्य वेदान्त्यभिमतात्मानं खण्डयितुम् 'तस्मादागमिकम्' इति सूत्रेण

आगमैकसमधिगम्यमात्मानमनूद्य तस्यैवात्मनः 'सुखदुःखज्ञान-निष्पत्त्यविशेषादैकात्म्यं सर्वशरीराणाम्' इति सूत्रेण तदभि-मतमेकत्वमप्यनूद्य 'नानात्मानो व्यवस्थातः' 'शास्त्रसामर्थ्याच्च' इति सूत्रद्वयेनात्मैकत्वनिराकरणपूर्वकमात्मनानात्वं व्यवस्थापि-तम् । अयं चार्थस्तत्सूत्रव्याख्यानादौ स्पष्टः । तद्यथा— एवं समधिगतस्यात्मनो नानात्वैकत्वसंदेहे पूर्वपक्षमाह । सुखदुःख-ज्ञाननिष्पत्त्याविशेषादैकात्म्यं सर्वशरीराणाम्, सर्वशरीरेष्वेक ए-वात्मा, तल्लिङ्गानां सुखदुःखज्ञानादीनां सर्वत्राविशेषात्, उक्तम् 'तल्लिङ्गाविशेषाद्विशेषलिङ्गाभावाच्चैको भावः' इति सिद्धान्त-माह 'नानात्मानो व्यवस्थातः' प्रतिशरीरं नानात्मानः । कुतः? व्यवस्थातः । व्यवतिष्ठन्ते हि ज्ञानसुखादयः प्रतिशरीरम्, नैकाधिकरण्येनानुसंधीयन्ते । ऐकात्म्ये तु एकशरीररूप एवा-नुसंधानप्रसङ्गः । हेत्वन्तरमाह— 'शास्त्रसामर्थ्याच्च' शास्त्रे-ऽप्येवं समर्थितानि भवन्ति । 'ज्ञाज्ञौ द्वावजावीशानीशौ' 'भोक्ता भोग्यं प्रेरितारं च मत्वा' 'द्वा सुपर्णा सयुजा सखा-या' 'यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमस्मादात्मानो व्युच्चरन्ति' इत्यादयो जीवनानात्वज्ञापकश्रुतयः । 'यो ब्रह्माणं विदधाति पूर्वम्' 'एको वशी सर्वभूतान्तरात्मा' 'नित्यो नित्यानां चेतनश्चेतनानाम्' इत्यादीन्येकत्वशास्त्राणि

त्वीश्वरविषयाणि । तस्मात्प्रतिशरीरं भिन्ना आत्मानः । इत्यादिकणादसूत्रतद्व्याख्यानयोरप्यात्मैकत्वमेव वेदान्तशास्त्राभिमतमित्यनूद्य निराकृतम् ।

किं च यथा वेदान्तशास्त्रे 'तर्काप्रतिष्ठानात्—' इत्यधिकरणे भगवता व्यासेन गौतममतनिराकरणं कृतं तद्वन्नचायतन्त्रेऽपि केवलाद्वैतमेव वेदान्तशास्त्राभिमतमित्यनूद्य निराकृतमिति द्रष्टव्यम् ।

किं च यथा वेदान्तशास्त्रे 'एतेन योगः प्रत्युक्तः' इत्यधिकरणे भगवता व्यासेन पतञ्जलिमतनिराकरणं कृतम्, तद्वद्योगशास्त्रेऽपि केवलाद्वैतमेव वेदान्तशास्त्राभिमतमित्यनूद्य निराकृतम् । तथा हि, भोजवृत्तौ । 'स्वरूपप्रतिष्ठा वा चितिशक्तिः' इतिसूत्रव्याख्यानावसरे 'ये तु वेदान्तवादिनः चिदानन्दमयत्वमात्मनो मोक्षं मन्यन्ते तेषां न युक्तः पक्षः । तथा हि— आनन्दस्य सुखरूपत्वात् सुखस्य च सदैव संवेद्यतयैव प्रतिभासात् संवेद्यमानत्वं च संवेदनव्यतिरेकेणानुपपन्नमिति संवेदनसंवेद्ययोरभ्युपगमादद्वैतहानिः' इत्यादिना वेदान्त्यभिमतत्वेन केवलाद्वैतमेवानूद्य निराकृतम् ।

किं च यथा वेदान्तशास्त्रे 'फलमत उपपत्तेः' इत्यधिकरणे भगवता व्यासेन जैमिनिमतनिराकरणं कृतं तद्वन्मीमांसाशा-

स्त्रेऽपि केवलाद्वैतमेव वेदान्तशास्त्राभिमतमित्यनूद्य निराकृतम् । तथा हि— तर्कपादे वार्तिके 'स्वयं च शुद्धरूपत्वादभावाच्चा-न्यवस्तुनः । स्वप्नादिवदविद्यायाः प्रवृत्तिस्तस्य किंकृता ॥ अन्ये-नोपप्लवेऽभीष्टे द्वैतवादः प्रसज्यते । स्वाभाविकीमविद्यां तु नो-च्छेत्तुं किंचिदर्हति ॥ विलक्षणोपपाते हि नश्येत्स्वाभाविकी क्वचित् । न त्वेकात्माभ्युपायानां हेतुरस्ति विलक्षणः ॥' इत्या-दिना भट्टपादैरपि केवलाद्वैतमेवानूद्य निराकृतम् ॥

शास्त्रदीपिकायां तर्कपादे—"स्यान्मतम् आत्मैवैको जगदा-सीत्स एव स्वेच्छया व्योमादिप्रपञ्चरूपेण परिणमते बीजमिव वृक्षरूपेण । चिदेकरसं कथं जडरूपेण परिणमते इति चेत्, न परमार्थतः परिणामं ब्रूमः ; किं त्वपरिणतमेव परिणतवत् एकमेव सदनेकधा मुखमिवादर्शेष्वविद्यावशाद्विवर्तमानमात्मैव आत्म-नश्चिद्रूपमचिद्रूपमिव, अद्वितीयं सद्वितीयमिव पश्यति सेयमवि-द्योपादाना स्वप्नप्रपञ्चवन्महदादिप्रपञ्चसृष्टिः । तथा च 'सर्वं ख-ल्विदं ब्रह्म' 'आत्मैवेदं सर्वम्' 'नेह नानास्ति किंचन' इत्यादयो बहवोऽद्वैतवादाः । तथा 'इन्द्रो मायाभिः पुरुरूप ईयते' इति भेदावगतेर्व्यक्तमेव मायानिबन्धनत्वं दर्शितम् । तथा 'लोकास्तं परादुर्योऽन्यत्रात्मनो लोकान्वेद' इत्यादिनानात्मदर्श-ननिन्दा, 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति'

इति च नानात्वदर्शननिन्दा, सर्वमिदमद्वितीयं ब्रह्मापरमनर्थकरी भेददृष्टिः, सृष्टिश्चाविद्योपादानेत्येतमर्थं प्रकटयति ” इत्यादिना पार्थसारथिमिश्रैरपि केवलाद्वैतमेव वेदान्तशास्त्राभिमतमित्यनूद्य निराकृतम् ॥

पाणिनितन्त्रेऽपि भर्तृहरिणोक्तम् । ‘यत्र द्रष्टा च दृश्यं च दर्शनं चापि कल्पितम् । तस्यैवार्थस्य सत्यत्वमाहुस्त्रय्यन्तवादिनः’ इत्यादि ।

किं च यथा वेदान्तशास्त्रे ‘पत्युरसामञ्जस्यात्’ इत्यधिकरणे भगवता व्यासेन पशुपतिमतनिराकरणं कृतम्, तद्वच्छैवागमेऽपि भगवता शिवेन केवलाद्वैतमेव वेदान्तशास्त्राभिमतमित्यनूद्य निराकृतम् । तथा हि— मृगेन्द्रसंहितायां ज्ञानपादे द्वितीयपटले ‘भरद्वाज उवाच– वेदान्तसांख्यसदसद्वादार्थिकमतादिषु । ससाधना मुक्तिरस्ति को विशेषः शिवागमे ॥ शक्र उवाच— प्रणेत्रसर्वदर्शित्वान्न स्फुटो वस्तुसंग्रहः । उपायाः सफलास्तद्वच्छैवे सर्वमिदंपरम् ॥ वेदान्तेष्वेक एवात्मा चिदचिद्व्यक्तिलक्षितः । आत्मैवेदं जगत्सर्वं नेह नानास्ति किंचन । प्रतिज्ञामात्रमेवेदं निश्चयः किंनिबन्धनः । अथ प्रमाणं तत्रात्मा प्रमेयत्वं प्रपद्यते ॥ यत्रैतदुभयं तत्र चतुष्टयमपि स्थितम् । अद्वैतहानिरेवं स्यान्निष्प्रमाणकतान्यथा ॥ भोगसाम्याविमोक्षौ च यौ नेष्टावात्म-

वादिभिः । नादत्ते कस्यचित्पापं न चैव सुकृतं विभुः ॥' इति । अत्र वेदान्तसांख्यार्हतकाणादादिमतेष्वपि मुक्तितत्साधनान्यपि सन्तीति । तन्मतापेक्षया शिवागमस्य को विशेष इतीन्द्रं प्रति भरद्वाजेन प्रश्ने कृते सति प्रणेत्रसर्वदर्शित्वादित्युत्तरवचनेन वेदान्तादिशास्त्रप्रणेतृणामसर्वज्ञत्वात्तन्मतेष्वर्थनिर्णयो न संभवतीति सामान्यतो दूषयित्वा विशिष्य वेदान्तमतमादौ दूषयितुं वेदान्तेष्वित्यादिना निष्प्रपञ्चाद्वितीयात्मस्वरूपवेदान्तमतमनूद्य तन्निराकरणाय विकल्पः कृतः । किं वेदान्ताः प्रमाणम् उताप्रमाणम्? यदि प्रमाणं तदात्मा प्रमेय इति वस्तुद्वयम्, यत्र प्रमाणं प्रमेयश्च तत्र प्रमाता प्रमितिश्चेति पुनरपि वस्तुद्वयमिति वस्तुचतुष्टयापत्त्याद्वैतहानिः स्यात् । द्वितीये वेदान्तमतस्याप्रामाणिकत्वमेव । आत्मन एकत्वात्सर्वेषां सुखाद्यनुभवसाम्यमपि स्यात्, अविमोक्षप्रसङ्गश्चेत्येवंप्रकारेण निराकृतम् । एवं मृगेन्द्रसंहिताव्याख्यातृभिर्भट्टनारायणपण्डितैः श्रीकण्ठाचार्यैस्तद्व्याख्यानव्याख्यातृभिरघोरशिवाचार्यैश्च वेदान्तमतानुवादतन्निराकरणप्रकारो विस्तरेण बहुधा प्रपञ्चितः । तत्सर्वं ग्रन्थविस्तरभयान्नेह लिख्यते । तथापि ज्ञापनार्थं किंचिल्लिख्यते । तत्र भट्टनारायणश्रीकण्ठाचार्यवृत्तिग्रन्थे । 'वेदान्तेष्वेक एवेति' तथा 'एको वशी सर्वभूतान्तरात्मा एकं विश्वं बहुधा यः करोति' इत्यादि-

श्रुतिभिः परमात्मैव सकलचिदचिद्भावाविर्भावतिरोभावप्रकृति-भूतः परिपूर्णषाड्गुण्यवैभवस्वतन्त्रः एकोऽपि सन् संसृत्यर्थं तत्तद्विविधमनोलक्षणोपाधिभेदस्वभावान्तरानुविधायी यथावदवगतोऽभ्युदयाय भवतीति वेदान्तस्यैव तथा तथा वैचित्र्येणावस्थितेः सत्यत्वादद्वैतप्रतिभासस्य द्वैतप्रतिभानस्य द्विचन्द्रादिज्ञानवद्भ्रान्तत्वात् । तथा चाह तत्रभवान्भर्तृहरिः— 'यथा विशुद्धमाकाशं तिमिरोपप्लुतो जनः । संकीर्णमिव मात्राभिश्चित्राभिरभिमन्यते ॥ तथैतदमृतं ब्रह्म निर्विकारमविद्यया । कलुषत्वमिवापन्नं भेदरूपे प्रवर्तते ॥' इति । एवं चाभिन्नमेवेदं परब्रह्मपरमात्मलक्षणं मनसां हि संसारधर्मैः सुखदुःखादिभियोंगः; परमात्मा तु सूर्य इवाम्भःप्रतिबिम्बभेदैरुपाधिभिरभिन्नोऽपि भिन्न इव प्रतिभाति । 'यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्नो बहुधैकोऽनुगच्छन् । उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा ॥' तदेतन्नोपपद्यत इति ।

अघोरशिवाचार्यकृततद्वृत्तिव्याख्यानेऽपि अथान्यदर्शनास्फुटत्वप्रकाशनाय प्रथमं वेदान्तवादिमतस्यास्फुटत्वं सूचयित्वा दर्शयितुं वेदान्तेष्वित्यादिश्लोकार्थेन तन्मतमुपन्यस्यते । तदेव दर्शयति आत्मैवेदमित्यादिना । अविद्यानुबन्धतः सत्यरूप एव पशुमृगाद्यनन्तशरीरभेदेन बहुप्रकारोऽथ जीवात्मभिर्दृश्यते स्वप्न

इव, स्वप्ने ह्यनन्तपुरुषप्रकाशादिप्रकाशो दृश्यते। ततश्च द्विचन्द्रप्रतिभासवद्द्वैतप्रतिभासोऽप्यसत्य इत्येक एवात्मा श्रुतितो युक्तितश्च सिद्ध इति। तस्मान्मृगेन्द्रसंहितातद्वृत्तितद्व्याख्यानपर्यालोचनया केवलाद्वैतमेव वेदान्तशास्त्राभिमतमिति सिद्धम् ॥

तथा अगस्त्यमहर्षिप्रणीतशिवरहस्येऽपि तृतीयांशे षट्त्रिंशाध्याये—'न ते गौतमाकाशनित्यत्ववादो मतो वेदवेदान्ततत्त्वज्ञमूर्ते। न ते जैमिनेः शब्दनित्यत्ववादो न मिथ्यात्ववादोऽपि वेदान्तिनां ते ॥ न बन्धोऽपि मोक्षोऽपि वेदान्तशास्त्रे तथा दृष्टिसृष्टिप्रवादोऽपि दृष्टः। अविद्याविलासो न कोऽपीह कल्प्यो विलासैर्यतस्ते जगज्जालमासीत् ॥ न चानन्तवेदान्तवार्ताविचारे हराराधकारध्यभावाभिमानः। न चेन्नाधुना कर्ममार्गो विनष्टः शिवाराधनामार्गवार्ता कुतः स्यात् ॥' इति ॥

अत्र गौतमाभिमताकाशनित्यत्वं जैमिन्यभिमतशब्दनित्यत्वं वेदान्त्यभिमतप्रपञ्चमिथ्यात्वबन्धमोक्षव्यवस्थाराहित्यदृष्टिसृष्ट्यादिकं चानूद्य निराकृतम्। एवं च गौतमजैमिनिसूत्रकारप्रायपाठाद्वेदान्तशब्दस्यापि ब्रह्मसूत्रप्रणेतृव्यासमहर्षिपरत्वस्य सिद्धत्वेन केवलाद्वैतमेव व्यासतात्पर्यविषय इति सिद्धम् ॥

किं च, यथा वेदान्तशास्त्रे 'उत्पत्त्यसंभवात्' 'समुदाय उभयहेतुकेऽपि तदप्राप्तिः' 'नैकस्मिन्नसंभवात्' 'एक आत्मनः शरीरे भावात्' इत्यधिकरणचतुष्टयेऽपि भगवता व्यासेन पाञ्चरात्रबौद्धार्हतचार्वाकतन्त्रचतुष्टयनिराकरणं कृतम् । तद्वत्पाञ्चरात्रादितन्त्रचतुष्टयेऽपि केवलाद्वैतमेव वेदान्तशास्त्राभिमतमित्यनूद्य निराकृतमिति द्रष्टव्यम् ॥

एवं च उक्तग्रन्थेषु तत्र तत्र केवलाद्वैतानुवादपूर्वकनिराकरणस्थले केवलाद्वैतस्य वेदान्तिमतत्वप्रतिपादनेन तादृशाद्वैतमेव वेदान्तशास्त्राभिप्रेतार्थ इति सिद्धौ व्यासस्य वेदान्तशास्त्रप्रवर्तकतया वेदान्तवादित्वावश्यंभावेन केवलाद्वैतमेव व्यासाभिमतमिति स्पष्टम् । तस्मात्सर्ववादिसंप्रतिपन्नकपिलकणादगौतमपतञ्जलिजैमिनितन्त्रेषु सूत्रभाष्यवार्तिकवृत्तिग्रन्थेषु पाशुपतपाञ्चरात्रबौद्धार्हततन्त्रेष्वप्युक्तरीत्या दशसु तन्त्रेषु वेदान्तिमतनिराकरणप्रस्तावे केवलाद्वैतस्यैवानूद्यमानत्वात्प्रतिवादिवाक्स्तम्भनपूर्वकं सकलजनहृदयंगमतया तदेवाद्वैतं व्यासतात्पर्यविषय इति युक्तमुत्पश्यामः ॥

एवं च सकलवेदान्तवाक्यार्थसूचकानां व्याससूत्राणामद्वितीये ब्रह्मणि तात्पर्येऽवधारिते तन्मूलभूतानां सर्वासामुपनिषदामप्यद्वितीये ब्रह्मणि तात्पर्यं सिद्धमेव । अत एवोक्तं श्रीम-

त्सूतसंहितायां यज्ञवैभवखण्डे दशमाध्याये— ‘एकमेवाद्वितीयं स्यादित्याह श्रुतिरादरात् । मायामात्रमिदं द्वैतमिति चाह परा श्रुतिः ॥ एकत्वं पश्यतो मोहः कः शोक इति चाह हि । द्वितीयाद्वै भयं नाल्पे सुखमित्यपि चाह हि ॥ अतस्तर्कप्रमाणाभ्यां वस्त्वेकत्वं सुनिश्चितम् । विदुषामनुभूत्या च वस्त्वेकत्वं सुनिश्चितम् ॥ वस्त्वेकत्वं महावाक्यादेव जानन्ति ये द्विजाः । ते मुच्यन्तीह संसाराद्यथा स्वप्नात्प्रबोधतः ॥ भेददर्शनमास्थाय मुक्तिं वाञ्छन्ति ये नराः । ते महाघोरसंसारे पतन्त्येव न संशयः ॥’ इति । तत्रैवैकोनचत्वारिंशाध्याये— ‘अथातः संप्रवक्ष्यामि समासेन न विस्तरात् । अविरोधं तु वेदानामशेषाणां मुनीश्वराः ॥ द्विविधो वेदराशिस्तु मुनयः संशितव्रताः । सत्याद्वैतपरः कश्चिद्वेदभागः समासतः ॥ कल्पितद्वैतनिष्ठस्तु वेदभागोऽपरो द्विजाः । सत्यमेव सदाद्वैतमसत्यं द्वैतमास्तिकाः ॥ प्रत्यक्षादेरगम्यत्वादद्वैतस्य तु सर्वदा । तत्रैवार्थवती साक्षादद्वैतश्रुतिरास्तिकाः ॥ अन्तरेण श्रुतिं भेदो लोकसिद्धः सदैव हि । तेन नार्थवती तत्र श्रुतिर्मानातिगामिनी ॥’ इति । तत्रैव ब्रह्मगीतायां पञ्चमाध्याये—‘त्वंशब्दार्थो य आभाति सोऽहंशब्दार्थ एव हि । योऽहंशब्दार्थ आभाति स त्वंशब्दार्थ एव हि । त्वमहंशब्दलक्ष्यार्थः साक्षात्प्रत्यक्चितिः

सुराः । तच्छब्दस्यैव लक्ष्यार्थः स हि नात्र विचारणा ॥ त्व-महंशब्दवाच्यार्थस्तेन देहादिवस्तुनः । न तच्छब्दार्थतां वक्ति श्रुतिस्तत्त्वमसीति या ॥ तदर्थैक्यविरुद्धांशं त्यक्त्वा वाच्यगतं श्रुतिः । अविरुद्धं चिदाकारं लक्षयित्वा ब्रवीति हि ॥ तदर्थे च त्वमर्थैक्यविरुद्धांशं विनैव तु । कारणत्वादि वाच्यार्थे लक्षयित्वा तु केवलम् ॥ चिदाकारं पुनस्तस्य त्वमर्थैक्यं ब्रवीति च । तत्त्वंशब्दार्थभूतस्य चिन्मात्रस्य परात्मनः ॥ एकत्वं यत्स्वतःसिद्धं स हि वाक्यार्थ आस्तिकाः । इतोऽन्यथा यो वाक्यार्थः सोऽवाक्यार्थो न संशयः ॥' इति । तत्रैव द्वादशाध्याये— 'वेदानामन्यथैवार्थं ये वदन्ति विमोहिताः । महासाहसिका एव नेतरे हि न संशयः ॥ मदुक्तार्थप्रकारेण विना ये प्रवदन्ति ते । अन्धकूपे निरालम्बे पतन्त्येव न संशयः ॥ वेदार्थं परमाद्वैतं नेतरत्सुरपुंगवाः । न चेदत्रैव मे मूर्धा पतिष्यति न संशयः ॥ अन्यथा वेदवाक्यानामर्थ इत्यतिशङ्कया । अनिश्चितार्थश्चेन्मूर्धा युष्माकं च पतिष्यति ॥ इतः परं न वक्तव्यं विद्यते सुरपुंगवाः । सत्यमेव मया प्रोक्तं शंभोः पादं स्पृशाम्यहम् ॥' इति ।

एवं भगवद्गीताया अपि केवलाद्वैतपरत्वमेव अभ्युपगन्तव्यम् । तत्र त्रयोदशाध्याये— 'क्षेत्रज्ञं चापि मां विद्धि

सर्वक्षेत्रेषु भारत । क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ॥ तत्क्षेत्रं यच्च यादृक्च यद्विकारि यतश्च यत् । स च यो यत्प्रभावश्च तत्समासेन मे शृणु ॥ ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् । ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ॥' इत्यादिभगवद्वचनैः क्षेत्रज्ञशब्दितस्य जीवस्य मामिति ब्रह्मत्वं प्रतिपाद्य तस्यैवार्थस्य ब्रह्मसूत्रप्रतिपाद्यत्वाभिधानेन ब्रह्मसूत्राणां च केवलाद्वैतपरत्वस्य निर्णीततया तत्समानार्थकभगवद्गीताया अपि केवलाद्वैतपरत्वावधारणात् । अत एव पाञ्चरात्रे पाद्मसंहितायाम्— 'परक्षेत्रज्ञयोरैक्यमात्मनः श्रुतिचोदितम् । क्षेत्रज्ञस्य बहुत्वं हि देहभेदात्प्रतीयते ॥ एकस्यैव तु बिम्बस्य दर्पणेषु यथा भिदा । भूतपञ्चकसंघातं क्षेत्रं तत्र व्यवस्थितम् ॥ जीवो यस्तं विदुः प्राज्ञाः क्षेत्रज्ञं परसंज्ञकम् ।' इत्यादिना परक्षेत्रज्ञयोरैक्यमुक्तम् । अत एव हनुमत्कृतपैशाचभाष्येऽप्युक्तं द्वितीयाध्याये— 'नासतो विद्यते भावो नाभावो विद्यते सतः । उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥ असतः अविद्यमानस्य रज्जुसर्पवद्दृष्टनष्टस्वभावस्य जगतः भावः सत्ता न विद्यते । तथा परमार्थतः सत आत्मनश्चाभावोऽविद्यमानता न विद्यते । सर्वत्राव्यभिचारात् । अनयोः सदसतोः दृष्टनष्ट उपलभ्यः अन्तो निश्चयः तत्त्वदर्शिभिः आत्म-

दर्शिभिरित्यर्थः । तस्मात्तत्त्वदर्शिनां दृष्टिमाश्रित्य शोकं मोहं च हित्वा शीतोष्णादींस्तितिक्षस्वेत्यभिप्रायः' इति । तत्रैवाष्टादशाध्याये—'भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः। ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥ भक्त्या भजनेन मां सर्वेश्वरमभिजानात्यवगच्छति यावानहमुपाधिकृतभिन्नप्रपञ्चरूपेण यश्चास्मीत्यपास्तसमस्तोपाधिस्वरूपेणेति च। तत्त्वतः परमार्थत एवं ततो ज्ञात्वा ततो मां तदनन्तरं विशते प्रविशति ब्रह्मैव संपद्यत इत्यर्थः' इत्यादिना प्रपञ्चमिथ्यात्वप्रतिपादनपूर्वकं जीवब्रह्मणोरैक्यं प्रतिपादितम् ॥

तथा याज्ञवल्क्यस्मृतावपि— 'आकाशमेकं हि यथा घटादिषु पृथग्भवेत् । तथात्मैको ह्यनेकश्च जलाधारेष्विवांशुमान् ॥' इत्यादिवचनजातमपि केवलाद्वैतमेव प्रतिपादयति ॥

एवं विष्णुपुराणेऽपि षष्ठांशे—'तद्भावभावमापन्नस्तथासौ परमात्मनः । भवत्यभेदी भेदस्तु तस्याज्ञानकृतो भवेत् ॥ विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते । आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥ ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः । तमेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम् ॥ प्रत्यस्तमितभेदं यत्सत्तामात्रमगोचरम् । वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम् ॥ अहं ममेत्यविद्येयं व्यवहारस्तथानया । परमार्थस्त्वसंलाप्यो

गोचरो वचसां न यः ॥' इति । तत्र तत्र प्रथमांशान्ते तु—
'अहं हरिः सर्वमिदं जनार्दनो नान्यत्ततः कारणकार्यजातम् ।
ईदृङ्मनो यस्य न तस्य भूयो भवोद्भवा द्वन्द्वगदा भवन्ति ॥'
इत्यादिवचनजातमपि केवलाद्वैतमेव प्रतिपादयति ॥

श्रीभागवतेऽपि एकादशस्कन्धे एकादशाध्याये—'श्रीकृष्णः—बद्धो मुक्त इति व्याख्या गुणतो मे न वस्तुतः । गुणस्य मायामूलत्वान्न मे मोक्षो न बन्धनम् ॥ शोकमोहौ सुखं दुःखं देहोत्पत्तिश्च मायया । स्वप्ने यथात्मनः ख्यातिः संसृतिर्न तु वास्तवी ॥ विद्याविद्ये मम तनू विद्ध्युद्धव शरीरिणाम् । मोक्षबन्धकरी आद्ये मायया मे विनिर्मिते ॥ एकस्यैव ममांशस्य जीवस्यैव महामते । बन्धोऽस्याविद्ययानादिर्विद्यया च तथेतरः ॥' तृतीयस्कन्धे देवहूतिकपिलसंवादे अष्टाविंशाध्याये—'सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि । ईक्षेतानन्यभावेन भूतेष्विव तथात्मताम् ॥ स्वयोनिषु यथा ज्योतिरेकं नाना प्रतीयते । योनीनां गुणवैषम्यं तथात्मा प्रकृतिस्थितः । तस्मादिमां स्वां प्रकृतिं दैवीं सदसदात्मिकाम् । दुर्विभाव्यां पराभाव्य स्वरूपेणावतिष्ठते ॥' एकोनत्रिंशाध्याये—'अर्च्यादावर्चयेत्तावदीश्वरं मां स्वकर्मकृत् । यावन्न वेद स्वहृदि सर्वभूतेष्ववस्थितम् ॥ आत्मनश्च परस्यापि यः करोत्यन्तरो-

दरम् । तस्य भिन्नदृशो मृत्युर्विदधे भयमुल्बणम् ॥' द्वात्रिंशे— 'ज्ञानमात्रं परं ब्रह्म परमात्मेश्वरः पुमान् । दृश्यादिभिः पृथग्भावैर्भगवानेक ईयते ॥ एतावानेव योगेन समग्रेणेह योगिनः । युज्यतेऽभिमतो ह्यर्थो यदसङ्गस्तु कृत्स्नशः ॥ ज्ञानमेकं पराचीनैरिन्द्रियैर्ब्रह्म निर्गुणम् । अवभात्यर्थरूपेण भ्रान्त्या शब्दादिधर्मिणा ॥' त्रयस्त्रिंशे—'भक्तिप्रवाहयोगेन वैराग्येण बलीयसा । युक्तानुष्ठानयोगेन ज्ञानेन ब्रह्महेतुना ॥ विशुद्धेन तथात्मानमात्मना विश्वतोमुखम् । स्वानुभूत्या तिरोभूतमायागुणविशेषणम् ॥ ब्रह्मण्यवस्थितमतिर्भगवत्यात्मसंश्रये । निवृत्तजीवापत्तित्वाद्वीतक्लेशात्मनिर्वृतिः ॥ नित्यारूढसमाधित्वात्परावृत्तगुणभ्रमः । न सस्मार तदात्मानं स्वप्नदृष्टमिवोत्थितः ॥' इत्यादिवचनजातमपि केवलाद्वैतमेव प्रतिपादयति ॥

तथा च पूर्वोक्तरीत्या कपिलादिसूत्रगतकेवलाद्वैतानुवादोपोद्बलितश्रुतिसूत्रस्मृतीतिहासपुराणानां केवलाद्वैतपरत्वस्यैव निर्धारितत्वेन 'सत्याद्वैतपरः कश्चिद्वेदभागः समासतः । कल्पितद्वैतनिष्ठस्तु वेदभागोऽपरो द्विजाः ॥' इति श्रीमत्सूतसंहितावचनानुसारेण तत्र तत्र भेदप्रतिपादकानां श्रुतिसूत्रस्मृतीतिहासपुराणानां कल्पितद्वैतपरत्वमेवास्थेयम् । अत एव साक्षात्परमेश्वरावताररूपैः सर्वज्ञैः सकलश्रुतिसूत्रस्मृतीतिहासपुराणा-

गमसंहितादितात्पर्यविषयीभूतार्थावधारणधुरीणैः श्रीमद्भगवत्पादैः श्रुतिसूत्रगीतासनत्सुजातीयसहस्रनामादिभाष्येषु केवलाद्वैतमेव परमार्थ इति अतिस्फुटतया प्रतिपादितम् । अत एवोक्तमादित्यपुराणे-- 'व्याकुर्वन्व्याससूत्राणि श्रुतेरर्थं यथोचिवान् । स एवार्थः श्रुतेर्ग्राह्यः शंकरः सवितानन ॥' इति । कूर्मपुराणेऽपि—'करिष्यत्यवताराणि शंकरो नीललोहितः । श्रौतस्मार्तप्रतिष्ठार्थं भक्तानां हितकाम्यया ॥ उपदेक्ष्यति तच्छास्त्रं यज्ज्ञानं ब्रह्मसंज्ञितम् ।' इति । तस्मात्सकलश्रुतिसूत्रस्मृतीतिहासपुराणतात्पर्यविषयीभूतं निरस्तसमस्तसजातीयविजातीयस्वगतभेदसत्ताकं नित्यशुद्धबुद्धमुक्तस्वभावं सच्चिदानन्दघनं निर्विशेषं परं ब्रह्मेति सिद्धम् ॥

नन्वेवमपि केवलाद्वैतस्य व्यासतात्पर्यविषयत्वव्यवस्थापनेन रामानुजमध्वादिमतव्युदासेऽपि व्यासमहर्षिप्रतिवादिनां कपिलकणादादिसूत्रकाराणां केवलाद्वैतमतं निराकृत्य भेदमेवाङ्गीकुर्वाणानां मतस्य निराकरणमन्तरा केवलाद्वैतस्थापनं कथमिति चेत्; न हि वयं व्यासप्रतिवादिकपिलकणादादिमतनिराकरणाय केवलाद्वैतप्रमाणोपन्यासं कर्तुं प्रवर्तामहे । किं तर्हि, कपिलाद्यनुवादबलेन व्यासतात्पर्यविषयीभूतार्थावधारणायैव । तस्मिंश्चावधारिते व्यासशिष्यैस्तत्तन्मतप्रवर्तकैः सर्वै-

रपि कपिलकणादादिमतनिराकरणपूर्वककेवलाद्वैतस्थापने यत्नः कर्तव्य इति नास्माकमेव निर्बन्धः। किं च, भाष्यविवरणवाचस्पत्यपरिमलपञ्चदशीप्रकरणादिग्रन्थेष्वेव श्रुतियुक्त्यनुभवबलेन कपिलादिमतं निराकृत्य केवलाद्वैतं व्यवस्थापितमेव। न चाभेदश्रुतियुक्त्यनुभववत् भेदश्रुतियुक्त्यनुभवानामपि विद्यमानत्वेन केवलाद्वैतमेव श्रुतितात्पर्यविषय इति सूत्रभाष्यादिग्रन्थेषु कथं व्यवस्थापितमिति वाच्यम्। 'द्वितीयाद्वै भयं जन्तोर्भवतीत्याह हि श्रुतिः। को मोहः कस्तदा शोक एकत्वमनुपश्यतः॥ इति चाह हि सा साध्वी श्रुतिरद्वैतमास्तिकाः। एकत्वमिति वाक्यार्थो नापरो मुनिसत्तमाः॥ स्तुतिनिन्दे विरुद्ध्येते यदि भेदो विवक्षितः॥' इति श्रीमत्सूतसंहितावचनेन भेदनिन्दापूर्वकमभेदस्य स्तूयमानत्वात्। अभेदश्रुतीनां षड्विधतात्पर्यलिङ्गाद्युपेतत्वेन प्रबलत्वात्। 'स च नारायणस्यांशो भगवान्बादरायणः' इत्यारभ्य 'सूत्रयामास वेदान्तवाक्यार्थं शंकराज्ञया' इत्यन्तेन पूर्वोक्तपुराणवचनेन 'अथातो ब्रह्मजिज्ञासा' इत्यादिव्याससूत्राणामेवौपनिषदब्रह्मस्वरूपनिर्णयैदंपर्येण प्रवृत्तत्वाच्च। व्यासाभिमतकेवलाद्वैतमेव सकलश्रुतिमहातात्पर्यविषय इत्यकामेनाप्यभ्युपगन्तव्यत्वात्॥

ननु, कपिलकणादगौतमपतञ्जलिजैमिनिभिः सर्वज्ञैरेव द्वैत-

तन्त्राणां प्रणीतत्वेन भूयोनुग्रहन्यायेन तदभिमतार्थस्यैव ग्राह्य-त्वेन कथं व्यासमात्राभिमतकेवलाद्वैताभ्युपगमो युक्तः? न च 'शतमप्यन्धानां न पश्यति' इति न्यायेन तेषां भ्रान्तिः कल्प्यत इति वाच्यम्। सर्वज्ञानां कपिलादिमहर्षीणां भ्रान्ति-कल्पनस्यानुचितत्वादिति चेत्, न; प्रकृतिपरमाण्वादिभिन्न-भिन्नजगत्कारणवादिनां कपिलकणादादीनां परस्परविरुद्धतन्त्र-प्रवर्तकतया ऐकमत्याभावेन भूयोनुग्रहन्यायानवतारात्। अत एवोक्तमभियुक्तैः—'कपिलो यदि सर्वज्ञः कणादो नेति का प्रमा। तावुभौ यदि सर्वज्ञौ मतभेदः कथं भवेत्' इति। किं च 'कणादस्याक्षपादस्य व्यासस्य कपिलस्य च। पतञ्ज-लेर्जैमिनेश्च दर्शनानि भवन्ति षट्' इत्यादिप्रसिद्धकणादगौ-तमकपिलव्यासपतञ्जलिजैमिनितन्त्रसिद्धान्तानां मध्ये एक एव सिद्धान्तार्थो व्यासकपिलादिसकलमहर्षिसंमत इति स्वीकर्त-व्यम्। अन्यथा परस्परविरुद्धसकलतन्त्रसिद्धान्तानां तदभिम-तत्वे तेषां व्यासकपिलादिसकलमहर्षीणां भ्रान्तिरेव स्यात्। तत्र यस्मिन्नर्थेऽभ्युपगम्यमाने सर्वेषामभ्रान्तत्वं सिध्यति, स एवार्थो ग्राह्यः। ततश्च कपिलकणादादितन्त्रसिद्धान्तस्य द्वै-तादेः श्रुतिविरुद्धत्वेन तदभ्युपगमे तेषां महर्षीणां भ्रान्त्या-पत्त्या सकलवेदान्ततात्पर्यविषयीभूतव्यासमहर्षिसिद्धान्तकेवला-

द्वैतमेव तेषां सर्वेषां संमतमित्यस्मिन्नर्थे न विवादः ॥

वस्तुतस्तु कपिलगौतमादिमहर्षीणामपि केवलाद्वैतमेवाभिमतमिति श्रीमद्भागवतादिपुराणपर्यालोचनया निर्णीयते । तथा हि श्रीमद्भागवते तृतीयस्कन्धे— 'ज्ञानमात्रं परं ब्रह्म परमात्मेश्वरः पुमान् । दृश्यादिभिः पृथग्भावैर्भगवानेक ईयते ॥ ज्ञानमेकं पराचीनैरिन्द्रियैर्ब्रह्म निर्गुणम् । अवभात्यर्थरूपेण भ्रान्त्या शब्दादिधर्मिणा ॥' इत्यादिपूर्वोदाहृतवचनैः कपिलस्य केवलाद्वैतमेवाभिमतमिति निश्चीयते । तथा ब्रह्मवैवर्ते गौतमः— 'नमो जप्येश्वरेशाय स्वान्यहीनाय शंभवे । तत्त्वानां परतत्त्वाय स्वयंभानाय हेतवे ॥ चिच्छक्तिर्जडशक्तिश्च तत्कार्याणि च तद्भिदा । तत्त्वतो यत्स्वरूपं हि विद्यते न पृथक्त्वतः ॥ तस्मै जप्येश्वरेशाय नमोऽद्वैतस्वरूपिणे । उत्तमा मध्यमा हीना ये च जीवाः पृथग्विधाः ॥ तत्त्वतो नातिरिच्यन्ते यस्मात्साम्बान्महेश्वरात् । तस्मै पञ्चनदेशाय नमो वै सर्वसाक्षिणे ॥ यत्सत्ता जगतः सत्ता यत्सत्तां न विना जगत् । यस्य भासा जगद्भानं यं विना न जगत्पृथक् ॥ आदित्यः सोम अग्निश्च यद्भासा भान्ति नित्यशः । तस्मै जप्येश्वरेशाय नमोऽद्वैतस्वरूपिणे ॥ यदानन्दोऽखिलानन्दो विभाति स्वयमेव हि । यः शिवः परमानन्दो वर्तते सर्वजन्तुषु ॥ तस्मै जप्येश्वरेशाय

नमो वै सर्वसाक्षिणे ॥' इत्यादिवचनैर्गौतमस्य केवलाद्वैतमेवाभिमतमिति प्रतिपाद्यते । तथा शैवे एकादशरुद्रसंहितायां व्यासजैमिनिसंवादे—'अहं हि भवतः साक्षाच्छिष्यभूतः सुशिक्षितः । तथापि मेऽपरोक्षं तु ज्ञानं नास्ति महामुने ॥ तस्य मे मुक्त्युपायं तु वद कारुण्यतोऽञ्जसा । सूतः— इति पृष्टो मुनिः श्रीमान्महाकारुणिकोत्तमः । आहूय जैमिनिं मां च रहस्येतदुवाच ह ॥ व्यासः—साधु पृष्टं त्वया वत्स लोकानां च हितप्रदम् । वदाम्यहमुपायं ते तवान्येषां च मुक्तिदम् । साम्बमूर्तिप्रसादेन नाज्ञातं मम विद्यते । ज्ञानादेव विमुक्तिः स्यान्नान्यथा कर्मकोटिभिः ॥ ज्ञानं वेदान्तजं ज्ञानमज्ञानं चान्यदिष्यते । जीवब्रह्मैक्यविषयं तदेव स्यान्न चेतरत् ॥ तच्च शंभोः प्रसादेन गुरोश्चैव प्रसादतः । तथा वेदान्तवाक्यनां तात्पर्यस्य विचारणात् ॥ जायते तच्छिवज्ञानं नान्यथा सत्यमीरितम् ।' इत्यादिवचनैर्जैमिनेः केवलाद्वैतमेवाभिमतमित्यवधार्यते ॥

तथा स्कान्दे शेषशिवसंवादे—'यथार्थं मत्स्वरूपस्य लोकैरमिततेजसः । अतिगुह्यं स्वसंवेद्यं शृणु त्वं वदतो मम ॥ शिवः—एष मायासमुत्पन्नः प्रसन्नः कर्मणि स्थितः । नैव जानाति मरणं सुखं दुःखं भयं द्विषम् ॥ कल्प्यते नियतं कर्ता मृत्तिकायां यथा घटः । मायया मयि कल्प्यन्ते तथा सर्गादि-

काः क्रियाः ॥ सकलं निष्कलं चेति मम रूपद्वयं स्मृतम् । सकलं चक्षुषा ग्राह्यं ध्येयं च नियतात्मभिः ॥ निष्कलं तु निराकारं निरञ्जनमनामयम् । न तद्दृश्यं न च ध्येयं नैवालोच्यं नृभिः फणिन् ॥ तथापि तेऽपि पश्यन्ति ये बुद्ध्या मत्परायणाः । निर्द्वन्द्वा निरहंकारा निरस्तकलिकल्मषाः ॥ आशीविष फणीन्द्र त्वां ज्वलद्वह्निविलोचनम् । सहस्रशिरसं दृष्ट्वा भवेल्लोको भयाकुलः ॥ अत्रिर्नाम महातेजास्तथा दिव्यतपोधनः । अनसूया च तत्पत्नी पुत्रं त्वां प्राप्तुमिच्छया ॥ कमलाक्षमजं विष्णुं द्वावपूजयतां चिरम् । प्रददौ त्वां तयोः शेष सोऽपि देवः कृपानिधिः ॥ तदा जन्मभयाद्बालो लसत्पञ्चफणान्वितः । तत्पत्न्याः स्नानशुद्धाया दृष्टोऽभूस्त्वं कराञ्जलौ । पुत्राभिलाषिण्यथ सा करस्थं बालरूपिणम् । विलोक्य सहसा भीता त्वाममुञ्चन्महीतले ॥ पतञ्जलिसमाख्याभूत्तदा तत्पतनाद्भुवि । अद्य त्वं तादृशो भूत्वा सहितः प्रज्ञयानया ॥ नाम्ना पतञ्जलिः ख्यातो ध्यायन्मां हृदि संततम् ॥' इत्यादिवचनैः पतञ्जलेः केवलाद्वैतमेवाभिमतमित्यवसीयते । एवमेव कणादस्यापि केवलाद्वैतमेवाभिमतमिति द्रष्टव्यम् ॥

तस्मात्कपिलकणादादीनां केवलाद्वैतमेवाभिमतमिति न कस्यापि भ्रान्तिकल्पना । न चोक्तरीत्या केवलाद्वैतस्य कपिलकणा-

दाद्यभिमतत्वे तेषां व्यासाभिमताद्वैतनिराकरणायोगेन केवला-द्वैतानुवादबलेनैवाद्वैतस्य व्यासतात्पर्यविषयत्वसमर्थनसंरम्भो वि-फलः स्यादिति वाच्यम्। तेषां केवलाद्वैतस्य मुख्यतात्पर्यविषय-त्वेऽपि चिकीर्षितस्वस्वसिद्धान्ताभिनिवेशमात्रेण तन्निराकरण-संभवात् । कार्यान्तराभिनिवेशमात्रेण स्वाभिमतार्थनिराकर-णमभियुक्तानामपि दृश्यते । तथा हि श्रीमद्रामायणे श्रीराम-जाबालिसंवादे— 'अष्टका पितृदैवत्यमित्ययं प्रसृतो जनः । अन्नस्योपद्रवं पश्य मृतो हि किमशिष्यति ॥ यदि भुक्तमिहा-न्येन देहमन्यस्य गच्छति । दद्यात्प्रवसतः श्राद्धं न तत्पथ्यशनं भवेत् ॥ दानसंवनना ह्येते ग्रन्था मेधाविभिः कृताः । यजस्व देहि दीक्षस्व तपस्तप्यस्व संत्यज ॥ स नास्ति परमित्येव कु-रु बुद्धिं महामते । प्रत्यक्षं यत्तदातिष्ठ परोक्षं पृष्ठतः कुरु ॥ सतां बुद्धिं पुरस्कृत्य सर्वलोकनिदर्शनीम् । राज्यं त्वं प्रतिगृ-ह्णीष्व भरतेन प्रसादितः ॥ श्रीरामः— सत्यं च धर्मं च परा-क्रमं च भूतानुकम्पां प्रियवादितां च । द्विजातिदेवातिथिपूज-नं च पन्थानमाहुस्त्रिदिवस्य सन्तः ॥ तेनैवमाज्ञाय यथावदर्थमे-कोदयं संप्रतिपद्य विप्राः । धर्मं चरन्तः सकलं यथावत्काङ्क्ष-न्ति लोकागममप्रमत्ताः ॥ निन्दाम्यहं कर्म पितुः कृतं तद्य-स्त्वामगृह्णाद्विषमस्थबुद्धिम् । बुद्ध्यानयैवंविधया चरन्तं सुना-

स्तिकं धर्मपथादपेतम् ॥ यथा हि चोरः स तथा हि बुद्धस्त-थागतं नास्तिकमत्र विद्धि । तस्माद्धि यः शङ्क्यतमः प्रजानां न नास्तिकेनाभिमुखो बुधः स्यात् ॥ त्वत्तो जनाः पूर्वतरेऽवराश्च शुभानि कर्माणि बहूनि चक्रुः । जित्वा सदेमं च परं च लोकं तस्माद्द्विजाः स्वस्ति हुतं कृतं च ॥ धर्मे रताः सत्पुरुषैः समेतास्तेजस्विनो दानगुणप्रधानाः । अहिंसका वीतमलाश्च लोके भवन्ति पूज्या मुनयः प्रधानाः ॥ इति ब्रुवन्तं वचनं सरोषं रामं महात्मानमदीनसत्त्वम् । उवाच तथ्यं पुनरास्तिकं च सत्यं वचः सानुनयं च विप्रः ॥ जाबालिः—

न नास्तिकानां वचनं ब्रवीम्यहं न नास्तिकोऽहं न च नास्ति किंचन । समीक्ष्य कालं पुनरास्तिकोऽभवं भवेय काले पुनरेव नास्तिकः ॥ स चापि कालोऽयमुपागतः शनैर्यथा मया नास्तिकवागुदीरिता। निवर्तनार्थं तव राम कारणात्प्रसादनार्थं च मयैतदीरितम् । क्रुद्धमाज्ञाय रामं तु वसिष्ठः प्रत्युवाच ह । जाबालिरपि जानीते लोकस्यास्य गतागतिम् ॥ निवर्तयितुकामस्तु त्वामेतद्वाक्यमुक्तवान् ॥' इत्यादिजाबालिश्रीरामवसिष्ठवचनैर्वस्तुतो धर्ममार्गप्रवर्तकेन जाबालिमहर्षिणा श्रीरामनिवर्तनार्थं नास्तिकपक्षमवलम्ब्य धर्ममार्गे अनूद्य निराकृते सति तत्प्रयुक्तश्रीरामकोपानन्तरं तस्य नास्तिकत्वाभाव-

प्रतिपादनेन जाबालिमहर्षेर्नास्तिकपक्षस्थापनधर्ममार्गनिराकरणयोस्तात्पर्याभावेऽपि धर्ममार्गानुवादांशे तात्पर्यस्य सद्भावात् । तद्वत् कपिलकणादादीनां द्वैतस्थापनाद्वैतनिराकरणयोस्तात्पर्याभावेऽपि केवलाद्वैतानुवादांशे तात्पर्योपपत्तेः । अतस्तदनुवादबलेनैव केवलाद्वैतस्य व्यासतात्पर्यविषयत्वसमर्थनसंरम्भोऽस्माकं सफल एव ॥

न च वेदान्तविरुद्धार्थप्रतिपादकानां कपिलकणादादितन्त्राणां का गतिरिति वाच्यम् । वेदान्ततात्पर्यविषयकेवलाद्वैतज्ञानाय तदपेक्षितासङ्गोदासीनसाक्षिरूपत्वं पदार्थविवेकप्रयोजनतया सांख्याशास्त्रस्य तदपेक्षितयमाद्यष्टाङ्गयोगप्रतिपादकतया योगशास्त्रस्य तदपेक्षितचित्तशुद्धिसंपादकधर्मविचारपरतया जैमिनिशास्त्रस्य तदपेक्षितषोडशपदार्थसप्तपदार्थोपपादनपूर्वकदशेन्द्रियादिव्यतिरिक्तात्मनिर्णयानुकूलतया गौतमकणादशास्त्रयोश्च उपयोगसंभवात् । न च तथा सति केवलाद्वैतज्ञानोपयोगिपदार्थमात्रनिरूपणस्यैव कर्तव्यत्वेन तद्विरुद्धप्रपञ्चसत्यत्वादिकमपि तेषु शास्त्रेषु किमर्थं निरूपितमिति वाच्यम् । वेदान्तशास्त्रानधिकारिणां मन्दमतीनां स्थूलारुन्धतीन्यायेन क्रमेण ब्रह्मसत्तावधारणायैव तदनुकूलशास्त्रप्रवृत्तिसिद्ध्यर्थं वस्तुतः प्रपञ्चसत्यत्वाभावेऽपि तत्तत्पुरुषवासनासिद्धप्रपञ्चसत्यत्वाद्युपदेशस्य प्रकृ-

तावश्यकत्वेन तन्निरूपणसंभवात् ॥

एवमेव पाशुपतपाञ्चरात्रादितन्त्राणामपि तात्पर्यं द्रष्टव्यम् , पाशुपतपाञ्चरात्रतन्त्रप्रणेतृभिः शिवविष्ण्वादिभिः श्रुतिपुराणादिषु केवलाद्वैतस्य स्फुटतया प्रतिपादनेन तदनुकूलतया तेषां तन्त्राणामपि केवलाद्वैतपरत्वस्य सिद्धत्वात् । तत्र पाञ्चरात्रपाशुपतादितन्त्रेषु केवलाद्वैतस्य स्फुटतया प्रतिपादनाच्च । अत एव पूर्वमेवोक्तम्— 'परक्षेत्रज्ञयोरैक्यमात्मनोः श्रुतिचोदितम्' इत्यादिना । तथा च तत्रत्यभेदवाक्यानां केवलाद्वैतज्ञानोपयोगिशिवविष्ण्वाद्युपासनापरत्वमित्यवधेयम् ॥

एवमेव बौद्धचार्वकादिबाह्यतन्त्राणामपि तात्पर्यं द्रष्टव्यम् , बौद्धचार्वाकादिबाह्यतन्त्रप्रणेतृभिः भगवद्बुद्धबृहस्पतिप्रभृतिभिः श्रीमत्सूतसंहितादिपुराणेषु केवलाद्वैतमेवाभ्युपगतमिति प्रतिपादनेन तदीयतन्त्राणामपि तत्रैव तात्पर्यवर्णनस्य युक्तत्वात् । तत्रत्यप्रपञ्चशून्यत्वप्रतिपादकवचनानां प्रपञ्चस्य हेयत्वसूचनद्वारा केवलाद्वैतज्ञानोपयोगिवैराग्यसंपादकतया चरितार्थत्वेन प्रपञ्चशून्यत्वे तात्पर्याभावात् देहात्मत्वादिविरुद्धांशप्रतिपादकवचनानां तु अनेकजन्मार्जितदुरितवासनाक्रान्तपुरुषविशेषाणां झटिति देहविलक्षणात्मज्ञानासंभवेन स्थूलारुन्धतीन्यायेन देहविलक्षणात्मज्ञानोपयोगित्वात् ॥

ननु सकलश्रुतिस्मृतिपुराणादिषु वैदिकव्यतिरिक्ततन्त्राणा-मग्राह्यत्वप्रतिपादनात् कथं तेषां वेदान्तशास्त्रोपयोगित्वोपपाद-नमिति चेत्---सत्यम्; तेषु तन्त्रेषु अवान्तरतात्पर्येण तत्तन्त्र-सिद्धान्तत्वेन प्रतिपाद्यमानस्य वेदान्तविरुद्धार्थस्यैव पारमार्थि-कत्वबुद्ध्या तेषामनुपादेयत्वेऽपि उक्तरीत्या तेषां तन्त्राणामपि परम्परया वेदान्तशास्त्रोपयोगित्वमिति बुद्ध्या उपादेयत्वेन तदुपपादनसंभवात् । तस्मात् बौद्धचार्वाकपाञ्चरात्रपाशुपत-न्यायवैशेषिकपूर्वमीमांसासांख्ययोगतन्त्राणमप्युक्तरीत्या वेदा-न्तशास्त्रोपयोगित्वं संभवतीति न काप्यनुपपत्तिः ॥

अत एवोक्तं श्रीमत्सूतसंहितायां यज्ञवैभवखण्डे द्वाविंशा-ध्याये---'अथातः संप्रवक्ष्यामि मार्गप्रामाण्यनिर्णयम् । श्रद्धया सहिता यूयं श्रृणुध्वं मुनिपुंगवाः ॥ वेदांश्च धर्मशास्त्राणि पुरा-णं भारतं तथा । वेदाङ्गान्युपवेदांश्च कामिकाद्यागमानपि ॥ कापालं वातुलं चैव तयोर्भेदान् द्विजर्षभाः । तथा पाशुपतं सोमं भैरवप्रमुखागमान् ॥ तेषामेवोपवेदांश्च शतशोऽथ सहस्रशः । विष्णवागमांस्तथा ब्राह्मान् बौद्धानार्हागमानपि ॥ लोकायतं त-र्कशास्त्रं बहुविस्तरसंयुतम् । मीमांसामतिगम्भीरां सांख्ययोगं तथैव च ॥ अनेकभेदान्यन्यानि तथा शास्त्रान्तराण्यपि । नि-र्ममे शंकरः साक्षात्सर्वज्ञः संग्रहेण तु ॥ प्रसादादेव रुद्रस्य ब्र-

ह्मविष्णवादयः सुराः । सिद्धविद्याधरा यक्षा राक्षसाद्यास्तथैव च । मुनयश्च मनुष्याश्च यथाभागं द्विजोत्तमाः । तान्येव विस्तरेणैव संग्रहेणैव वा पुनः ॥ कुर्वन्ति तानि मानानि कथितानि मनीषिभिः । अधिकारिविभेदेन नैकस्यैव सदा द्विजाः ॥ तर्कैरेतेऽपि मार्गास्तु न हन्तव्या मनीषिभिः । यथा तोयप्रवाहाणां समुद्रः परमावधिः ॥ तथैव सर्वमार्गाणां साक्षान्निष्ठा महेश्वरः । येन येन प्रकारेण जनैर्येभिरुपासितः ॥ तत्तन्मार्गानुगुण्येन साधकत्वमुपैति सः । तत्प्रसादात्क्रमान्मार्गान्विशिष्टानेति मानवः ॥ तत्र तत्र स्थितो देवः प्रसादं कुरुतेऽस्य तु । सोपानक्रमतो देवो वेदमार्गस्य कारणम् ॥ वेदमार्गस्थितो देवः साक्षान्मुक्तेस्तु कारणम् । तत्रापि कर्ममार्गस्थो ज्ञानश्रद्धाप्रदो हरः ॥ ज्ञानभागस्थितः शंभुर्ज्ञानद्वारेण मोक्षदः । एकरूपा परा मुक्तिस्ततस्तद्विषया मतिः ॥ एकरूपा भवेन्नैव नानारूपा भविष्यति । वेदान्तः शंकरं साक्षान्निर्विशेषाद्वयात्मना ॥ वक्ति मार्गान्तरान्नैवं ततो विद्या तु वेदजा । अतो मार्गान्तराज्जाता मतयो मतिमत्तराः ॥ अविद्या नैव विद्या स्यादिति सम्यङ्निरूपणम् । तस्मान्मार्गान्तराणां तु प्रामाण्यं वेदवित्तमाः ॥ मुक्तेरन्यत्र नात्रैव क्रमेणैवात्ममानता । अतो वेदान्तमार्गस्थो महादेवोऽचिरेण तु ॥ मुक्तिं ददाति नान्य-

त्रास्थितः सोऽपि क्रमेण तु । ददाति परमां मुक्तिमित्येषा शाश्वती श्रुतिः ॥ अतो वेदाश्रयो मर्त्यो नान्यमार्गं समाश्रयेत् । वेदमार्गैकनिष्ठानां न किंचिदपि दुर्लभम् ॥ अत्रैव परमा मुक्तिर्न चाप्यन्यत्र पुष्कला । अतोऽधिकारिभेदेन मार्गो मानं न संशयः ॥ ईश्वरस्य स्वरूपे च बन्धहेतौ तथैव च । जगतः कारणे मुक्तौ ज्ञानादौ च तथैव च ॥ मार्गाणां ये विरुद्धांशा वेदान्ते न विचक्षणाः । तेऽपि मन्दमतीनां च महामोहाहृतात्मनाम् ॥ वाञ्छामात्रानुगुण्येन प्रवृत्ता न यथार्थतः । दर्शयित्वा तृणं मर्त्यो धावन्तीं गां यथाग्रहीत् ॥ दर्शयित्वा तथा तेषामिदं पूर्वं महेश्वरः । पुण्यानां चानुगुण्येन ददाति ज्ञानमुत्तमम् ॥ तस्मादुक्तेन मार्गेण शिवेन कथिता अमी । मार्गामानं न चामानं मृषावादी कथं शिवः ॥ महाकारुणिको देवः सर्वज्ञो निर्मलः खलु । तथापि वेदो मार्गाणामुत्तमः सर्वसाधकः ॥ सर्वमुक्तं समासेन मार्गप्रामाण्यनिर्णयम् । एवं बुद्ध्वा श्रुतौ श्रद्धां कुरुध्वं यत्नतो द्विजाः’ इति । तस्मात् सकलश्रुतिसूत्रस्मृतीतिहासपुराणागमतन्त्राणां व्यासाभिमतकेवलाद्वैत एव तात्पर्यस्यावधारितत्वेन तादृशाद्वैतमेव परमार्थ इति सिद्धम् ॥

इति प्रथमः परिच्छेदः ॥

---

# द्वितीयः परिच्छेदः ॥

---

समस्तजगदाधारसगुणब्रह्मनिर्णयम् ।
भगवत्पादसिद्धान्तमनुसृत्य करोम्यहम् ॥

अत्र केचिदप्पय्यदीक्षितचरणानामद्वैतविद्याचार्याणां परम-तात्पर्यविषयीभूतार्थमविज्ञाय तत्कृतशिवतत्त्वविवेकादिग्रन्थाना-लोक्य ब्रह्मशिवविष्ण्वपेक्षया तुरीयशिवस्य व्यावहारिकाधिक्यं वर्णयन्ति । तद्भ्रमनिरासव्याजेन सगुणब्रह्मनिर्णयाय द्वितीय-परिच्छेद आरभ्यते ॥

ननु, अस्तु व्यासतात्पर्यविषयीभूतकेवलाद्वैतस्वरूपं सत्य-ज्ञानानन्दात्मकं निर्विशेषं परं ब्रह्म । तज्ज्ञानप्राप्तिः कथमिति चेत्, उच्यते— 'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्' 'इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः । मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते' 'ईश्वरा-नुग्रहादेव पुंसामद्वैतवासना । महाभयपरित्राणाद्विप्राणामेव जायते ॥ अतीव शुद्धचित्तानां प्रसादादेव मे हरे । इच्छा-

सायुज्यरूपायां मुक्तौ सम्यग्विजायते ॥ मम प्रसादहीनानां साक्षान्मुक्तौ न जायते । वेदमार्गैकनिष्ठानां मद्भक्तानां महात्मनाम् ॥ प्रवृत्तिपर्यन्ता श्रद्धा साक्षान्मुक्तौ विजायते । अनेकजन्मसंसिद्धश्रौतस्मार्तानुवर्तिनाम् ॥ परमाद्वैतविज्ञानं जायते सुरपुंगवाः । युष्माकमपि सर्वेषां शिवस्य परमात्मनः । परमाद्वैतविज्ञानं प्रसादादेव नान्यथा' इत्यादिश्रुतिस्मृतिपुराणेषु परमेश्वरप्रसादादेव केवलाद्वैतविज्ञानप्राप्तिरिति प्रतिपादनेन प्राचीनबहुजन्मार्जितपुण्यपरिपाकविशुद्धचित्तस्य पुरुषस्य परमेश्वरप्रसादादेव तादृशब्रह्मज्ञानं श्रवणादिद्वारा संपद्यते ।

अन्येषां तु परमेश्वरप्रसादहीनानां गौतमदधीचिशापग्रस्तानां महापापाम्बुधिनिमग्नानां केवलाद्वैतज्ञाने रुचिरपि न जायते । प्रत्युत प्रद्वेष एव जायते । अत एवोक्तं श्रीमत्सूतसंहितायाम्— 'गौतमस्य मुनेः शापाद्दधीचिमुनिशापतः । पूर्वजन्मकृतात्पापादयमर्थो न रोचते ॥ महापापवतां नृणां परमाद्वैतवेदने । प्रद्वेषो जायते साक्षाद्वेदजन्ये शिवेऽपि च' इति । तस्मात्केवलाद्वैतज्ञानस्य परमेश्वरप्रसादाधीनत्वेन तत्प्रसादाय तदुपासनमवश्यं कर्तव्यम् ॥

अथ कश्च परमेश्वरो यस्य प्रसादाद्ब्रह्मज्ञानप्राप्तिरिति चेत्, अत्राभिधीयते— 'मायां तु प्रकृतिं विद्यान्मायिनं तु

महेश्वरम् । अस्मान्मायी सृजते विश्वमेतत्' 'ईश्वरो जगतः कर्ता मायया स्वीयया पुरा । अभेदेन स्थितः पूर्वकल्पवासनयान्वितः ॥ कालकर्मानुगुण्येन स्वाभिन्नः स्वीयमायया । अभिन्नोऽपि तया स्वस्य भेदं कल्पयति प्रभुः ॥ कल्पितोऽयं द्विजा भेदो नाभेदं बाधते सदा । कल्पितानामसत्त्वाच्च न विरोधश्च सिध्यति ॥ पुनः पूर्वक्षणोत्पन्नवासनाबलतोऽनघाः । ईक्षिता पूर्ववद्भूत्वा स्वशक्त्या परया युतः' इत्यादिश्रुतिपुराणपर्यालोचनया मायोपहितचैतन्यमेव परमेश्वर इत्युच्यते । तस्यैव परमेश्वरस्य 'यतो वा इमानि भूतानि जायन्ते' 'तदैक्षत बहु स्यां प्रजायेयेति' 'जन्माद्यस्य यतः' 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' इत्यादिश्रुतिसूत्रेभ्यो जगज्जन्मादिकारणत्वं प्रतिपाद्यते, सृष्ट्यादिषु मायासंबन्धमात्रस्यैव प्रयोजकत्वात् । जगज्जन्मादिकारणत्वं चाभिन्ननिमित्तोपादानत्वे पर्यवसन्नम् । तत्रोपादानत्वं च स्वाध्यस्तसमस्तप्रपञ्चाधिष्ठानत्वमिति वक्तव्यम् । एतच्चामूर्तव्यापकरूपेणैव परमेश्वरस्य संभवति; न तु विग्रहोपहितपरिच्छिन्नरूपेण, विग्रहस्य सर्वत्र प्रपञ्चेऽनुस्यूतत्वाभावात् । तस्यैव मायोपहितस्य सर्वज्ञत्वसर्वशक्तित्वाद्यनन्तकल्याणगुणशालित्वमप्यभ्युपगम्यते । 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इति श्रुतेः ।

अत एव 'सर्वोपेता च तद्दर्शनात्' इत्यधिकरणे 'विकरणत्वान्नेति चेत्तदुक्तम्' इति सूत्रस्य भाष्ये 'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः' इत्यकरणस्यापि ब्रह्मणः सर्वसामर्थ्यं दर्शयतीत्यादिना परमेश्वरस्य शरीरापेक्षां विनापि सकलसामर्थ्यमस्तीति सिद्धान्तितम् । तथा च पूर्वोक्तजगज्जन्मादिकारणत्वरूपलक्षणलक्षितो मायाबिम्बभूतः परमेश्वर एक एव सर्वोपास्यः । तत्प्रतिबिम्बो जीव उपासकः । सोऽप्यन्तःकरणभेदादनेकरूपतया व्यवह्रियते । 'एक एव हि भूतात्मा भूते भूते व्यवस्थितः । एकधा बहुधा चैव दृश्यते जलचन्द्रवत्' इत्यादिश्रुतेः । परमेश्वरस्त्वेक एव सन्भक्तानुग्रहार्थं स्वेच्छयैव ब्रह्मविष्णुशिवादि लीलाविग्रहान्परिगृह्णातीत्यभ्युपगम्यते ॥

अमूर्तोपासनस्योत्तमाधिकारिविषयत्वेऽपि मायोपहितस्यामूर्तस्य परमेश्वरस्य मन्दाधिकारिणां बुद्ध्यनारोहेण तदुपासनस्य तादृशैः कर्तुमशक्यत्वात् । तदुक्तं रामतापिन्याम्— 'चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः । उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पना' इति । ज्ञानवासिष्ठेऽपि— 'न देवः पुण्डरीकाक्षो न च देवस्त्रिलोचनः । न देवो देहरूपोऽसौ न देवश्चित्ररूपकः ॥ अकृत्रिममनाद्यन्तं वेदनं देव उच्यते

अज्ञातशिवतत्त्वानां साकाराद्यर्चनं स्मृतम् ॥ योजनाध्वन्यश-क्तस्य क्रोशाध्वा परिकल्प्यते' इति । पाञ्चरात्रेऽपि— 'न ते रूपं न चाकारो नायुधानि न चास्पदम् । तथापि पुरुषा-कारो भक्तानां त्वं प्रकाशसे' इति । शिवागमेऽपि—'यतीनां मन्त्रिणां चैव ज्ञानिनां योगिनां तथा । ध्यानपूजानिमित्तं हि तनुं गृह्णाति चेच्छया' इति । अत एव 'अन्तस्तद्धर्मोपदे-शात्' इत्याद्यधिकरणेषु 'स्यात्परमेश्वरस्यापीच्छावशान्मायामयं रूपं साधकानुग्रहार्थम्' इत्यादिभाष्यसंदर्भेणाशरीरस्यापि प-रमेश्वरस्यादित्यमण्डलाद्यन्तर्वर्तिहिरण्मयपुरुषादिरूपेणोपास्यत्व-मिति सिद्धान्तितम् ॥

ननु जगत्कारणस्य सदसद्रूपसाधारणतया वादिविप्रतिपत्ति-विषयत्वाच्छून्यवादव्यावृत्तये 'सदेव सोम्येदमग्र आसीत्' इति श्रुत्या सद्रूपत्वं प्रतिपाद्यते । तस्य सद्रूपस्य जगत्कारणस्य चेत-नाचेतनसाधारणरूपतया वादिविप्रतिपत्तिविषयत्वात्सांख्यवैशे-षिकाद्यभिमतप्रकृतिपरमाण्वादिजगत्कारणवादव्यावृत्तये 'आत्मा वा इदमेक एवाग्र आसीत्' इति श्रुत्या चेतनत्वं प्रतिपाद्यते । तस्य सतश्चेतनस्य जगत्कारणस्य जीवब्रह्मसाधारणरूपतया वा-दिविप्रतिपत्तिविषयत्वात् । हिरण्यगर्भेन्द्राग्निसूर्यादिजीवव्यावृत्तये 'ब्रह्म वा इदमेक एवाग्र आसीत्' इति श्रुत्या ब्रह्मरूपत्वं

प्रतिपाद्यते । तस्य सतश्चेतनस्य ब्रह्मणो जगत्कारणस्य शिव-नारायणादिसाधारणरूपतया वादिविप्रतिपत्तिविषयत्वात् ॥

व्यावृत्तये च्छागपशुन्यायेन 'यदा तमस्तन्न दिवा न रा-त्रिर्न सन्न चासच्छिव एव केवलः' इत्यादिश्रुत्या शिवरूपत्वं वा, 'एको ह वै नारायणः' इत्यादिश्रुत्या विष्णुरूपत्वं वा अस्त्विति चेत्, उच्यते—

अत्र किं भेदपक्षमाश्रित्य शिवस्य विष्णोर्वा जगत्कारणत्व-मुच्यते, अभेदपक्षमाश्रित्य वा। नाद्यः ; प्रथमपरिच्छेद एव भेद-शङ्कापङ्कप्रक्षालनस्य कृतत्वेन पुनः पुनस्तद्भेदवादस्य लज्जावह-त्वात् । अत एव द्वितीयपरिच्छेदारम्भे रामानुजमध्वश्रीकण्ठादि-भेदप्रतिपादकभाष्याणाममूलकत्वज्ञापनाय भगवत्पादसिद्धान्तम-नुसृत्य सगुणब्रह्मनिर्णयं करोमीत्यस्माभिर्नान्दीश्लोके प्रतिपादि-तम् । न द्वितीयः, छागपशुन्यायस्थले 'अग्नीषोमीयं पशुमालभेत' इत्यत्र श्रुतस्य पशुशब्दस्य च्छागगवादिसाधारणतया सामान्य-स्यानुष्ठानायोगेन तदनुष्ठानाय विशेषाकाङ्क्षायाम् 'अग्नीषोमाभ्यां छागस्य वपाया मेदसः' इति मन्त्रवर्णपर्यालोचनया सामान्य-विशेषन्यायावतारेण विशेषपर्यवसानाभ्युपगमेऽपि प्रकृते तादृ-शन्यायानवतारेण जगत्कारणस्य ब्रह्मणो देवताविशेषपर्यवसाना-भावात् । तथा हि—'सत्यं ज्ञानमनन्तं ब्रह्म' 'आनन्दो ब्रह्मेति

व्यजानात्' इत्यादिश्रुत्या सच्चिदानन्दाखण्डब्रह्मस्वरूपत्वं ब्रह्मणः प्रतिपाद्यते। तस्य ब्रह्मणो निर्विशेषत्वाज्जगज्जन्मादिकारणत्वं नोपपद्यत इति कृत्वा 'अस्मान्मायी सृजते विश्वमेतत्' 'मायिनं तु महेश्वरम्' इत्यादिश्रुत्या मायोपहितवेषेण जगज्जन्मादिकारणत्वमुपपाद्यते। एतादृशमायोपहितब्रह्मण एव च्छान्दोग्यैतरेयतैत्तिरीयशाखादिषु वाक्यान्तरमनपेक्ष्यैव सदादिपदैरनूद्य सदादिपदवाच्यं ब्रह्मैव जगत्कारणमिति निश्चितत्वेन विशेषाकाङ्क्षाभावात्सामान्यविशेषन्यायोऽत्रानुचित एव। किंच, अभेदपक्षे शिवस्य नारायणस्य वा जगत्कारणत्वमिति विचार एव न संभवति, उभयोर्भेदाभावात्। न च शिवनारायणयोः स्वरूपकृतभेदाभावेऽपि तयोरौपाधिकभेदमङ्गीकृत्य च्छागपशुन्यायावतारे बोध इति वाच्यम्। उपासनाप्रकरणे शिवनारायणयोरौपाधिकभेदलेशोऽपि नास्तीत्यस्य बहुधा वक्ष्यमाणत्वात्। न च तथापि शिवनारायणयोरन्यतरस्य जीवभावमेवाङ्गीकृत्य तदितरस्य जगत्कारणत्वमस्त्विति वाच्यम्। 'ब्रह्मा विष्णुश्च रुद्रश्च विभक्ता अपि पण्डिताः। परमात्मविभागस्था न जीवव्यूहसंस्थिताः' इत्यादिबहुप्रमाणैस्त्रिमूर्तीनामीश्वरभावस्य वक्ष्यमाणत्वात्। किंच, ब्रह्मादिसामान्यशब्दानां शिवे नारायणे वा विशेषपर्यवसानमित्यभ्युपगमे 'सर्वाननशिरोग्रीवः

सर्वभूतगुहाशयः । सर्वव्यापी च भगवांस्तस्मात्सर्वगतः शिवः ॥ अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' इत्यादिश्रुत्या शिवनारायणशब्दयोर्व्यापकपरत्वमुच्यते ? 'उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम् । ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्' 'अथ पुनरेव नारायणः सोऽन्यत्कामं मनसाध्यायत । तस्य ध्यानान्तःस्थस्य ललाटात्त्र्यक्षः शूलपाणिः पुरुषोऽजायत' इत्यादिश्रुत्या विग्रहविशिष्टत्वमुच्यते वा ? नाद्यः; 'सत्यं ज्ञानमनन्तं ब्रह्म' इति श्रुत्यन्तरगतब्रह्मपदेनैव चरितार्थत्वेन ब्रह्मशिवनारायणशब्दानां हस्तकरपाणिशब्दवदव्यापकस्वरूपपर्यायत्वाद्विशेषाकाङ्क्षाभावेन च्छागपशुन्यायस्यानवतारात्, ब्रह्मशिवनारायणशब्दानामेकार्थपरत्वेऽपि 'ब्रह्मवादिनो वदन्ति' 'अथातो ब्रह्मजिज्ञासा' 'यं ब्रह्म वेदान्तविदो वदन्ति' इत्यादिश्रुतिसूत्रपुराणेषु वेदान्तवादिनां ब्रह्मशब्दव्यवहारस्यैव सुप्रसिद्धत्वाच्च । न द्वितीयः, विकल्पासहत्वात् । तत्रापि किं केवलविग्रहस्य जगत्कारणत्वमुच्यते, उत केवलब्रह्मणः, तद्विशिष्टस्य वा । नाद्यः; केवलविग्रहस्य मायाकार्यत्वाच्चेतनत्वाभावेन व्यापकत्वाभावेन च निमित्तोपादानकारणद्वयरूपत्वासंभवात् । न च 'घृतकाठिन्यवद्विप्राः केवलं कृपयैव तु । आविर्भूतं महानन्द-

ताण्डवं करुणालयम्' इत्यादिस्कान्दवचनमनुसृत्य घृतकाठिन्यदृष्टान्तेन विग्रहविग्रहिणोरभेदमङ्गीकृत्य तद्विग्रहस्य जगत्कारणत्वे को दोष इति वाच्यम्; विग्रहस्य परिच्छिन्नत्वाद्विग्रहिणोऽपरिच्छिन्नत्वाच्च तयोरभेदस्य वक्तुमशक्यत्वात्। न च विग्रहस्याप्यपरिच्छिन्नत्वे बाधकाभाव इति वाच्यम्; विग्रहस्य सावयवत्वेन तस्यापरिच्छिन्नत्वस्य वक्तुमशक्यत्वात्। 'सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्तः परः पुरुष एक इहास्य धत्ते। स्थित्यादये हरिविरिञ्चिहरेति संज्ञाः श्रेयांसि तत्र खलु सत्त्वतनोर्नृणां स्युः' इत्यादिभागवतपुराणादिवचनेषु भगवद्विग्रहस्य मायामयत्वेन प्रतिपादितत्वाच्च। न च विग्रहविग्रहिणोरैक्यप्रतिपादकस्कान्दपुराणादिवचनानां का गतिरिति वाच्यम्। पूर्वोक्तस्कान्दपुराणादिवचनानां बाधितार्थप्रतिपादकत्वेन स्वार्थे तात्पर्याभावेऽप्युपासकानां विश्वासोत्पादने तात्पर्यमिति वक्तुं शक्यत्वात्। न द्वितीयः। तत्रापि किं मायातीतशुद्धब्रह्मणो जगत्कारणत्वमुच्यते, मायोपहितस्य वा। नाद्यः; 'अस्मान्मायी सृजते विश्वमेतत्' 'मायिनं तु महेश्वरम्' इत्यादिश्रुत्यनुसारेण मायासंबन्धमन्तरा निर्विशेषस्य मायातीतब्रह्मणः प्रपञ्चहेतुत्वाभावात्। द्वितीये, इष्टापत्तेः त्वया विग्रहविशिष्टस्यैव जगत्कारणत्वाभ्युपगमेन त्वदनिष्टप्रसङ्गाच्च।

नापि तृतीयः ; तत्रापि किं विग्रहविशिष्टस्य निमित्तत्वमुच्यते; उपादानत्वमुच्यते वा; पक्षद्वयेऽपि सिद्धान्तहानिप्रसङ्गात् । सत्त्वप्रधानमायोपहितवेषेण ब्रह्मणः निमित्तत्वं तमःप्रधानमायोपहितवेषेण ब्रह्मण उपादानत्वमिति सकलग्रन्थकारैः प्रतिपादितत्वात् । तदुक्तं पञ्चदशीप्रकरणे विद्यारण्यगुरुचरणैः— 'जगतो यदुपादानं मायामादाय तामसीम् । निमित्तं शुद्धसत्त्वां तामुच्यते ब्रह्म तद्गिरा' इति । न चैवं सति पुरुषसूक्तकैवल्यतापनीयादिश्रुतिषु विग्रहविशिष्टस्यैव जगत्कारणत्वप्रतिपादनेन तच्छ्रुतीनां का गतिरिति वच्यम् । 'कानिचिद्वेदवाक्यानि ब्राह्मणा वेदपारगाः । रुद्रमूर्तिं समाश्रित्य शिवे परमकारणे ॥ पर्यवस्यन्ति विप्रेन्द्रास्तथा वाक्यानि कानिचित् । विष्णुमूर्तिं समाश्रित्य ब्रह्ममूर्तिं च कानिचित् ॥ आग्नेयीं मूर्तिमाश्रित्य श्रुतिवाक्यानि कानिचित् । सूर्यमूर्तिं मुनिश्रेष्ठास्तथैवान्यानि कानिचित् ॥ पुराणैर्दशभिर्विप्राः प्रोक्तो रुद्रस्तथैव च । चतुर्भिर्भगवान्विष्णुर्द्वाभ्यां ब्रह्मा प्रकीर्तितः ॥ अग्निरेकेन विप्रेन्द्रास्तथैकेन दिवाकरः । एवं मूर्त्यभिधानेन द्वारेणैव मुनीश्वराः ॥ प्रतिपाद्यो महादेवः स्थितः सर्वासु मूर्तिषु । स एव मोचकः साक्षाच्छिवः सत्यादिलक्षणः' इत्यादिवक्ष्यमाणस्कान्दादिवचनेषु 'शिवे परमकारणे' 'स्थितः सर्वासु मूर्तिषु' इत्युप-

क्रमोपसंहारपर्यालोचनया मायोपहितामूर्तपरमेश्वरगतजगत्कारण-त्वमेव शिवविष्ण्वादिविग्रहोपासनाय तत्तद्विग्रहविशिष्टेषु प्रतिपाद्यत इति पुरुषसूक्तकैवल्यतापनीयादिश्रुतितात्पर्यवर्णनोपपत्तेः; विग्रहविशिष्टस्यैव जगत्कारणत्वपक्षे शिवविग्रहविशिष्टस्य नारायणविग्रहविशिष्टस्य वा जगत्कारणत्वमिति विनिगमकाभावाच्च। यदि श्वेताश्वतराथर्वशिखादिश्रुत्या शिवविग्रहविशिष्टस्यैव सर्वकारणत्वम्, तथा 'अथ पुनरेव नारायणः सोऽन्यत्कामो मनसा ध्यायति । तस्य ध्यानान्तःस्थस्य ललाटात्त्र्यक्षः शूलपाणिः पुरुषोऽजायत' इत्यादि महोपनिषदादिश्रुत्यनुसारेण वैष्णवाभिमतविग्रहविशिष्टनारायणस्य सकलकारणत्वं किं न स्यात्? न च 'ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्ते । कारणं तु ध्येयः सर्वैश्वर्यसंपन्नः सर्वेश्वरः शंभुराकाशमध्ये' इत्यादिश्रुत्या नारायणस्य शिवजन्यत्वं प्रतिपाद्यत इति न तस्य सर्वकारणत्वमिति वच्यम् । 'नारायणाद्रुद्रोऽजयत' इत्यादिश्रुत्या शिवस्यापि नारायणजन्यत्वप्रतिपादनेन तस्यापि सर्वकारणत्वोपपत्तेस्तुल्यत्वात् । तस्माद्विनिगमनाविरहेण शिवविष्ण्वाद्यभिन्नः अस्मदभिमतमायोपहितामूर्तपरमेश्वर एव सर्वकारणमित्यभ्युपेयम् । एतेन 'ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्ते' इति श्रुत्या ब्रह्मादित्रिमूर्तीनामुत्पत्तिप्रतिपादनेन तेषां जीव-

भाव एव न ब्रह्मभाव इति कथमुपास्यत्वमित्यपि शङ्का गलहस्तिता ॥

अथास्य पुरुषस्य चत्वारि स्थानानि भवन्ति— नाभिर्हृदयं कण्ठो मूर्धा च । 'अत्र चतुष्पादं ब्रह्म विभाति जागरिते ब्रह्मा, स्वप्ने विष्णुः, सुषुप्तौ रुद्रः, तुरीयमक्षरम्' इति ब्रह्मोपनिषदादिवचनेन 'एक एव शिवः साक्षात्सृष्टिस्थित्यन्तसिद्धये । ब्रह्मविष्णुशिवाख्याभिः कल्पनाभिर्विजृम्भितः' 'ब्रह्मा विष्णुश्च रुद्रश्च विभक्ता अपि पण्डिताः । परमात्मविभागस्था न जीवव्यूहसंस्थिताः ॥ पुण्यपापावृता जीवा रागद्वेषमलावृताः । जन्मनाशाभिभूताश्च सदा संसारिणोऽवशाः ॥ ब्रह्मविष्णुमहेशानां तथा तेषां द्विजर्षभाः । आविर्भावविशेषाणां पुण्यपापादयो न हि ॥ आज्ञया परतत्त्वस्य जीवानां हितकाम्यया । आविर्भावतिरोभावौ तेषां केवलमास्तिकाः ॥ हरिर्ब्रह्मा हरस्तेषामाविर्भावाश्च सुव्रताः । सदा संसारिभिर्जीवैरुपास्या भुक्तिमुक्तये ॥ सृष्टिस्थित्यन्तकरणीं ब्रह्मविष्णुशिवात्मिकाम् । स संज्ञां याति भगवानेक एव जनार्दनः' 'सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्तः परः पुरुष एक इहास्य धत्ते । स्थित्यादये हरिविरिञ्चिहरेति संज्ञाः श्रेयांसि तत्र खलु सत्त्वतनोर्नृणां स्युः' इत्यादिसूतसंहिताविष्णुपुराणभागवतवचनैश्च ब्रह्मादित्रिमूर्तीनां ब्र-

ह्मकोटित्वं मुमुक्षूपास्यत्वमाविर्भावतिरोभावादिकं च प्रतिपादितमिति न जीवत्वं नानुपास्यत्वं न जन्यत्वमिति तच्छङ्काङ्कुरानवकाशात् । ततश्च मायोपहितस्य जगत्कारणस्यैकस्यैव परमेश्वरस्य स्वमायागतसत्त्वादिगुणोपाधितः स्वेच्छयैव ब्रह्मादित्रिमूर्तिरूपतयाविर्भावाभ्युपगमेन 'ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्ते' इति श्रुतेस्तादृशाविर्भावपरत्वमेवाभ्युपगम्यते ॥

'ननु कारणं तु ध्येयः सर्वैश्वर्यसंपन्नः सर्वेश्वरः शंभुराकाशमध्ये' इत्यादिश्रुतिबलेन शिवस्यैव सर्वकारणत्वमस्तु; 'नारायणाद्रुद्रो जायते' इति श्रुतेर्गुणमूर्तिशिवपरत्वेन तुरीयशिवस्य सर्वकारणत्वे बाधकाभावात्; इति चेत्, तत्र किं विग्रहोपहितरूपेण तुरीयशिवस्य सर्वकारणत्वमुच्यते, तदुपलक्षितरूपेण वा । नाद्यः कल्पः कल्पकानां हृदयाकल्पमल्पमपि कल्पयति; तुरीयविग्रहस्यापि सावयवत्वेन कार्यत्वावश्यंभावितया तत्रापि विग्रहोपहितकारणान्तरापेक्षायामनवस्थापत्तेः । न चानादिरेव परमेश्वरस्य विग्रहः कश्चिदस्तीति वाच्यम् । विग्रहमात्रस्य मायाजन्यत्वेनानादित्वे मानाभावात्; 'अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः' 'विकरणत्वान्नेति चेत्तदुक्तम्' 'अकरणस्यापि ब्रह्मणः सर्वसामर्थ्यं दर्शयति' इत्यादिश्रुतिसूत्रभाष्यविरोधप्रसङ्गात्, विग्रहोपहितरूपेण

परमेश्वरस्य निमित्तोपादानत्वं नास्तीति पूर्वमेव निराकृतत्वाच्च । द्वितीये, विग्रहोपलक्षितरूपस्यैवास्मदभिमतमायोपहितचैतन्यरूपत्वेन घट्टकुटीप्रभातवृत्तान्तन्यायेन तस्यैव सकलकारणत्वमित्यस्मदिष्टसिद्धिः । नन्वेवमपि जगत्सृष्ट्याद्यर्थं तुरीयविग्रहानभ्युपगमेऽपि 'कारणं तु ध्येयः सर्वैश्वर्यसंपन्नः सर्वेश्वरः शंभुराकाशमध्ये' इत्यथर्वशिखावाक्यानुसारेणोपासनार्थं तुरीयपरमेश्वरशिवमूर्तिरभ्युपगम्यताम् ; अत एव ब्रह्मादित्रिमूर्त्यपेक्षया तुरीयमूर्तेर्विशिष्टस्य परमशिवस्योत्कर्षोऽपि भवतीति चेत्, उच्यते— अथर्वशिरसि 'ध्यायीतेशानम्, प्रध्यायितव्यं सर्वमिदम्, यतो ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्ते सर्वाणि चेन्द्रियाणि सह भूतैः स कारणं कारणानां धाता ध्याता कारणं तु ध्येयः सर्वैश्वर्यसंपन्नः सर्वेश्वरः शंभुराकाशमध्ये' इत्यत्र 'ध्यायीतेशानम्' 'कारणं तु ध्येयः' इत्यनेन ईशानादिशब्दवाच्यस्य जगत्कारणीभूतस्य परमेश्वरस्य ध्येयत्वं विधीयते। कारणत्वं च तस्य मायोपहितामूर्तरूपेणैवेत्यस्माभिः प्राक्प्रतिपादितम्। तदनुसारेण 'शंभुराकाशमध्ये' 'शिव एको ध्येयः' इत्यत्रापि शंभुशिवादिशब्दानामप्यमूर्तपरशिवपरत्वमेव स्वीकृत्य तादृशशिवस्यैव ध्येयत्वं विधीयत इत्यभ्युपगन्तव्यम् । ततश्च अथर्वशिखोपनिषदस्तादृशपरमेश्वरस्य ध्येयत्वप्रतिपादन-

मात्रतात्पर्यकत्वेऽपि न तुरीयमूर्तिप्रतिपादने तात्पर्यं सिध्यति। यदि च 'उमासहायं परमेश्वरं विभुं त्रिलोचनम्' इत्यादि-कैवल्यश्रुतौ उमासहायत्वत्रिलोचनत्वनीलकण्ठत्वादिगुणविशि-ष्टपरमेश्वरस्यैव ध्येयत्वावगमात् तदनुरोधेन गुणोपसंहार-न्यायेन तत्रापि तादृशशिवस्यैव ध्येयत्वं कल्पनीयमित्युच्यते, तथापि तादृशगुणमूर्तिशिवरूपेणोपासनार्थमारोपिततादृशशि-वरूपेण वा परमेश्वरोपासनं संभवतीति न तदर्थं तुरीयमूर्ति-कल्पना। यद्वा, 'ध्यायीतेशानम्' इत्यत्र गुणमूर्तिशिवस्यैव ध्येयत्वं विधाय तन्निर्वाहार्थमुपास्यभूतगुणमूर्तिशिवस्य परब्रह्म-त्वख्यापनाय 'कारणं तु ध्येयः' इत्यादिना अमूर्तपरमेश्वर-रूपेण व्यवस्थापितं कारणत्वसर्वेश्वरत्वादिकं तदभिन्नतया गुण-मूर्तिशिवेऽपि प्रतिपाद्यते। 'ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्ते' इति श्रुतेः परमेश्वरस्य स्वेच्छयैवाविर्भावपरत्वेनाप्युपपन्नतया तस्यैव गुणमूर्तिरुद्ररूपेणाविर्भावः अमूर्तरूपेण कारणत्वं चाविरुद्ध-मिति न काप्यनुपपत्तिः। एवमेव स्कान्दादिशिवपुराणानाम-पि तात्पर्यं द्रष्टव्यम्। अत एव स्कान्दे 'कानिचिद्वेदवाक्यानि ब्राह्मणा वेदपारगाः। रुद्रमूर्तिं समाश्रित्य शिवे परमकारणे। पर्यवस्यन्ति विप्रेन्द्रास्तथा वाक्यानि कानिचित्। विष्णुमूर्तिं समाश्रित्य ब्रह्ममूर्तिं च कानिचित्। आग्नेयीं मूर्तिमाश्रित्य

श्रुतिवाक्यानि कानिचित् । सूर्यमूर्तिं समाश्रित्य तथैवान्यानि कानिचित् । पुराणैर्दशभिर्विप्राः प्रोक्तो रुद्रस्तथैव च । चतुर्भिर्भगवान्विष्णुर्द्वाभ्यां ब्रह्मा प्रकीर्तितः । अग्निरेकेन विप्रेन्द्रास्तथैकेन दिवाकरः । एवं मूर्तिविधानेन द्वारेणैव मुनीश्वराः । प्रतिपाद्यो महादेवः स्थितः सर्वासु मूर्तिषु । स एव मोचकः साक्षात् शिवः सत्यादिलक्षणः । ब्रह्मविष्णुमहादेवैरुपास्यः सर्वदा द्विजाः' इति प्रागुक्तानि । अत्र ब्रह्मविष्णवादिमूर्तिविशिष्टरूपेण परमेश्वरोपासनार्थं ब्रह्मादिसकलमूर्त्यनुस्यूतो जगत्कारणीभूतमायोपहितामूर्तरूप एव परमेश्वरः परमशिवमहादेवादिशब्दितः सन् कैश्चिद्वेदान्तैः पुराणैश्च रुद्रमूर्तिविशिष्टरूपेण कैश्चिद्विष्णुमूर्तिविशिष्टरूपेण कैश्चित् ब्रह्ममूर्तिविशिष्टरूपेण कैश्चिदग्निसूर्यमूर्तिविशिष्टरूपेण च प्रतिपाद्यत इत्ययमर्थो ज्ञायते । ततश्च शिवपरत्वेन प्रसिद्धानि कैवल्याथर्वशिखादिश्रुतिवाक्यानि स्कान्दशैवादिपुराणानि च गुणमूर्तिशिवरूपेण परमेश्वरोपासनार्थमेव मायोपहितामूर्तपरमेश्वरगतजगत्कारणत्वादिकं गुणमूर्तिशिवेऽपि प्रतिपादयन्तीति तात्पर्यं स्पष्टीकृतम् । अत एव श्रीमद्विष्णुभागवते चतुर्थस्कन्धेऽत्रिमहर्षितपश्चर्याप्रकरणे 'प्राणायामेन संयम्य मनो वर्षशतं मुनिः । अतिष्ठदेकपादेन निर्द्वन्द्वोऽनिलभोजनः ॥ शरणं

तं प्रपद्येऽहं य एव जगदीश्वरः । प्रजामात्मसमां मह्यं प्रयच्छत्विति चिन्तयन्’ इत्यारभ्य ‘विश्वोद्भवस्थितिलयेषु विभज्यमानैर्मायागुणैरनुयुगं विगृहीतदेहाः । ते ब्रह्मविष्णुगिरिशाः प्रणतोऽस्म्यहं वस्तेभ्यः क एव भगवान्न इहोपहूतः ॥ एको मयेह भगवान्विविधप्रधानैश्चित्तीकृतः प्रजननाय कथं नु यूयम् । अत्रागतास्तनुभृतां मनसोऽपि दूराः ब्रूत प्रसीदत महानिह विस्मयो मे ॥ मैत्रेयः— इति तस्य वचः श्रुत्वा त्रयस्ते विबुधर्षभाः । प्रत्यूचुः श्लक्ष्णया वाचा प्रहस्य तमृषिं विभो ॥ देवाः— यथा कृतस्ते संकल्पो भाव्यं तेनैव नान्यथा । सत्संकल्पस्य ते ब्रह्मन्यद्वै ध्यायति ते वयम् ॥ अथास्मदंशभूतास्ते आत्मजा लोकविश्रुताः । भवितारोऽङ्ग भद्रं ते विस्रप्स्यन्ति च ते यशः ॥ एवं कामवरं दत्त्वा प्रतिजग्मुः सुरेश्वराः’ इत्यन्तेन वचनजातेन एकमेव जगदीश्वरमुद्दिश्य प्रजार्थं तपस्यतः सत्यसंकल्पस्यात्रिमहर्षेर्ब्रह्मविष्णुरुद्रात्मकमूर्तित्रयरूपेणैव प्रसन्नो जगदीश्वरस्तदभिलषितवरं दत्त्वा यथास्थानं गतः इति प्रतिपादनात्त्रिमूर्तिव्यतिरेकेण मूलभूतमूर्त्यन्तरं जगदीश्वरस्य नास्तीति तात्पर्यं स्पष्टीकृतम् ॥

नन्वेवं सति ‘अरूपस्य शिवस्यापि मूर्तिर्ध्येयास्त्युपासकैः । उमार्धविग्रहा शुद्धा त्रिनेत्रा चन्द्रशेखरा ॥ नीलग्रीवा परा-

नन्दप्रमोदा ताण्डवप्रिया । ब्रह्मविष्णुमहादेवैरुपास्या गुणमूर्तिभिः ॥ सर्वमूर्तिविहीनस्य सर्वभूताधिपस्य तु । तथाप्येषा परा मूर्तिरित्येषा शाश्वती श्रुतिः' इत्यादिस्कान्दवचनेषु तुरीयशिवमूर्तेर्गुणमूर्त्युपास्यत्वप्रतिपादनदर्शनात्तादृशवचनानां का गतिरिति चेत्, न; स्मृतिपुराणाद्यष्टादशविद्यानां वेदमूलकत्वेन प्रवृत्तत्वेऽपि क्वचित्क्वचित्प्रदेशेषु वैदिकविरुद्धशैववैष्णवाद्यागमानुसारेण तादृशाधिकारिणं प्रति प्रवृत्तत्वात्; वैदिकानां तदंशो न ग्राह्य इति पुराणवचनैरेव तत्र तत्र व्यवस्थापितत्वात् । तदुक्तं श्रीमत्सूतसंहितायाम्— 'परमेश्वरविज्ञानान्मुच्यते भवबन्धनात् । पारमेश्वरविज्ञानं वेदादेव न चान्यतः ॥ आगमान्तरजन्यं तु ज्ञानं न ज्ञानमास्तिकाः । अष्टादशानां विद्यानां वेदादन्याश्च वित्तमाः ॥ विद्या वेदानुसारेण प्रवृत्ताः सर्वशोभनाः । तथापि तासु सर्वासु कश्चिदंशः क्वचित्क्वचित् ॥ शैवागमानुसारेण तत्प्रभेदानुसारतः । विष्ण्वागमानुसारेण तत्प्रभेदानुसारतः ॥ ब्रह्मागमानुसारेण तत्प्रभेदानुसारतः । अधिकारिविभेदेन क्रमेणैव विमुक्तये । प्रवर्तते मुनिश्रेष्ठाः सत्यमेव मयोदितम् ॥ तत्तत्तन्त्रेषु ये मर्त्या दीक्षिता मुनिसत्तमाः। सोंऽशस्तैरेव संग्राह्यः सर्वथा नैव वैदिकैः' इति । सौरसंहितायामपि— 'यस्तु वेदविरुद्धांशः पुराणेष्वखिलेषु

च । तदंशस्तु परित्याज्यः सर्वथा सकलैरपि ॥ तन्त्रावलम्बनेनैव पुराणानि च कानिचित् । साक्षाद्वेदविरुद्धार्थं प्रवदन्ति क्वचित्क्वचित् ॥ अधिकारिविभेदेन नैव वेद परं प्रति' इति ॥

अस्तु वा तुरीयशिवमूर्तिः; तथापि गुणमूर्त्यपेक्षया तुरीयमूर्तिविशिष्टस्योत्कर्ष इत्येतदनुपपन्नम्; तुरीयमूर्तेरिव गुणमूर्तीनामपि परमेश्वरमूर्तित्वेन तदनुस्यूतस्य परमेश्वरस्यैकतया तरतमभावासंभवात् । न च परमेश्वरविग्रहस्य गुणमूर्त्याविर्भावहेतुत्वेन ब्रह्माद्यपेक्षया परमशिवस्योत्कर्ष इति वाच्यम् । सर्वासां परमेश्वरमूर्तीनामीश्वरोपाधिभूतमायामात्रप्रयुक्तत्वेन तुरीयमूर्तिवद्गुणमूर्तीनामपि स्वेच्छाकल्पितत्वात् । अस्तु वा गुणमूर्तीनां तुरीयविग्रहादाविर्भावः । तथापि नानुपपत्तिः । यथा रामानुजमतेऽपि रामकृष्णादीनां नारायणाविर्भावरूपत्वेऽपि नारायणापेक्षया तेषां नापकर्षः; तद्वत् ब्रह्मादिमूर्तीनां परमशिवापेक्षया नापकर्षः । अन्यथा 'नारायणाद्रुद्रोऽजायत' इति श्रुत्या रुद्रस्य नारायणादाविर्भावप्रतिपादनेन शैवमते रुद्रस्य नारायणापेक्षयापकर्षापत्तेः । न चेष्टापत्तिः; परमशिववादिभिः रुद्रस्य नारायणापेक्षयोत्कर्षस्यैवाङ्गीकारात् । ननु विष्णुशिवयोरीश्वरभावसंभवेऽपि चतुर्मुखस्य ब्रह्मणो जीवसमष्टिरूपहिरण्यगर्भत्वेन प्रसिद्धतया कथमीश्वरभाव इति चेत्, न; 'प्रतीताद्भौ-

तिकादस्माद्भूतानि मुनिपुंगवाः । उत्कृष्टानि तथा तेभ्यो जीवात्मा चेतनः प्रभुः ॥ समष्टिव्यष्टिभावेन सोऽपि भिन्नः परस्परम् । व्यष्टयश्च तथाभिन्नास्ताश्च भावानुसारतः ॥ देवतिर्यङ्मनुष्यादि शरीरं प्राप्नुवन्ति हि । आसां समष्टिभूतस्तु श्रेष्ठः सर्वात्मना बुधाः ॥ ततो विशिष्टाः सकला ब्रह्मणस्तु विभूतयः । ताश्चान्योन्यविशिष्टाः स्युर्यथा जीवा मुनीश्वराः ॥ तासां ब्रह्माधिकस्तस्माद्विष्णुः श्रेष्ठः प्रकीर्तितः । सोऽपि स्वव्यष्टिभूतेभ्यो वरिष्ठः परिकीर्तितः ॥ ततो रुद्रोऽधिकः सोऽपि स्वव्यष्टिभ्योऽधिकः स्मृतः । ब्रह्मा विष्णुश्च रुद्रश्च परतत्त्वविभूतयः ॥ तेषां त्रयाणामधिकः सर्वकारणमीश्वरः । ततोऽधिकं परं तत्त्वं ज्ञानमानन्दमद्वयम्' इत्यादिश्रीमत्सूतसंहितावचनेषु आसां समष्टिभूत इत्यनेन देवतिर्यङ्मनुष्यादिसकलजीवसमष्टिरूपत्वेन हिरण्यगर्भस्य समष्टिजीवत्वं प्रतिपाद्य 'ततो विशिष्टाः सकला ब्रह्मणस्तु विभूतयः तासां ब्रह्माधिकः' इत्यनेन हिरण्यगर्भापेक्षया त्रिमूर्त्यन्तर्गतस्य ब्रह्मणः तद्विभूतीनां चोत्कर्षोपपादनपूर्वकं भिन्नतया प्रतिपादनेन तस्य ब्रह्मणः 'ब्रह्मा विष्णुश्च रुद्रश्च परतत्त्वविभूतयः' इति वचनानुसारेणेश्वरभावसिद्धेः । ननु ब्रह्मादित्रिमूर्तीनामीश्वरभावसत्त्वेऽपि उदाहृतस्कान्दवचनेषु जीवानामिव ईश्वरकोटिप्रविष्टानां ब्रह्मादीनां

मध्ये शिवस्यैवाधिक्यप्रतिपादनेन तदुपासनस्यैवाधिक्यमस्त्वि-
ति चेत्, न। तत्र किं विशेषणभूतविग्रहमात्रोपासनस्याधिक्य-
मुच्यते, उत विशेष्यमात्रस्य, आहोस्विद्विग्रहविशिष्टस्य वा।
नाद्यः; केवलविग्रहस्य मायाकार्यत्वेन चेतनत्वाभावादुपासका-
नामभिमतफलदानसामर्थ्याभावेन 'प्रयोजनमनुद्दिश्य न मन्दो-
ऽपि प्रवर्तते' इति न्यायेनानुपास्यमानकेवलविग्रहाधिक्यकल्प-
नस्याप्रयोजकत्वात्। न द्वितीयः; तत्रापि किं मायातीतशुद्ध-
ब्रह्मस्वरूपस्याधिक्यमुच्यते, मायोपहितस्य वा; पक्षद्वयोन्मेषा-
नवकाशात्। 'एकमेवाद्वितीयम्' इत्यादिश्रुत्या मायातीतशुद्ध-
ब्रह्मस्वरूपस्यैकरूपत्वात्। 'अस्मान्मायी सृजते विश्वमेतत्'
इत्यादिश्रुत्या मायोपहितब्रह्मस्वरूपस्याप्येकत्वाच्च पदार्थद्वयम-
न्तरा न्यूनाधिकभावकल्पनस्याभित्तिचित्रायमाणत्वात्। नापि
तृतीयः। ततोपि किं विशेषणतारतम्याद्विशेष्यस्यापि तारतम्य-
मभ्युपगम्यत इत्युच्यते, विशिष्टं पदार्थान्तरमिति कृत्वा प्रमा-
णबलादुमार्धविग्रहविशिष्टस्याधिक्यमुच्यते वा। नाद्यः। यथा
एकस्यैव देवदत्तस्य तत्तद्व्यापारभेदेन याचकपाचकनर्तकपाठकभ-
ट्टादिसंज्ञामात्रभेदं विना संज्ञिभेदव्यवहारः तत्प्रयुक्ततरतमभावो-
ऽपि नास्ति, तद्वन्मायोपहितस्यैकस्यैव परमेश्वरस्य सत्त्वादितत्त-
द्गुणवैशिष्ट्यभेदेन ब्रह्मविष्णुशिवादिसंज्ञामात्रभेदं विना संज्ञिभे-

दस्य तत्प्रयुक्ततरतमभावस्यापि वक्तुमशक्यत्वात् । तदुक्तं विष्णुपुराणे—'सृष्टिस्थित्यन्तकरिणीं ब्रह्मविष्णुशिवात्मिकाम् । स संज्ञां याति भगवानेक एव जनार्दनः' इति । अन्यथा उपाधिभेदादुपधेयभेदस्यावश्याभ्युपगमे सत्त्वप्रधानमायोपाधिना निमित्तत्वम् अन्यस्य तमःप्रधानमायोपाधिना उपादानत्वमन्यस्य इति कारणद्वयस्यावश्यमङ्गीकर्तव्यत्वेन पूर्वोक्ताभिन्ननिमित्तोपादानत्वसिद्धान्तहानिप्रसङ्गात् । किं च, परमेश्वरस्य संज्ञिभेदमादाय तरतमभावाभ्युपगमे उत्तमाधममध्यमेश्वरप्रसङ्गेन ईश्वरनानात्वापत्त्या 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति' इत्यादिपरमेश्वरैकत्वबोधकश्रुतिविरोधापत्तेः । न च पूर्वोक्ताभिन्ननिमित्तोपादानत्वस्य सृष्टिस्थितिसंहारकर्तृत्वस्य च विशेष्याभेदाभिप्रायेण चरितार्थतया 'यतो वा इमानि' इत्यादिपरमेश्वरैकत्वबोधकश्रुतिविरोधो नास्तीति वाच्यम् । विशेष्यमात्रस्य निर्विशेषब्रह्मणः मायासंबन्धमन्तरा जगत्सृष्ट्यादिसामर्थ्याभावेन विशेष्यैक्यप्रतिपादनस्य व्यर्थत्वात् ॥

ननु एवं सति उपाधिभेदादुपधेयभेदानभ्युपगमे जीवेश्वरयोरप्युपाधिकृतभेदाभावेन तत्प्रयुक्ततारतम्याभावेन च सर्वज्ञत्वकिंचिज्ज्ञत्वव्यवस्थाभावात् जीवस्यापि जगत्कर्तृत्वमीश्वरस्यापि संसारित्वमित्याद्यतिप्रसङ्ग इति चेत्, न । यथा बि-

म्बप्रतिबिम्बयोरभेदेऽपि दर्पणगतपीतत्वश्यामत्वचलनत्वादिमलिनधर्माक्रान्तत्वं प्रतिबिम्बस्यैव, बिम्बस्य तद्गतमालिन्यलेशोऽपि नास्ति; तद्वद्रजस्तमोऽभिभूतमलिनसत्त्वानां जीवानां तत्तदन्तःकरणोपाधिभेदकृततारतम्यसत्त्वेऽपि रजस्तमोऽनभिभूतशुद्धसत्त्वप्रधानमायोपाधिकानां ब्रह्मादित्रिमूर्तीनाम् ईश्वरत्वसर्वज्ञत्वनियामकत्ववशीकृतमायत्वानावृतचैतन्यत्वादीनां तुल्यत्वेन एकस्यैव देवदत्तस्य कम्बलदुकूलादिपरिधानवत् एकस्यैव परमेश्वरस्य सत्त्वादिगुणमूर्तिपरिग्रहसंभवेन मूर्तिभेदमात्रेण तरतमभावासंभवात्; 'यो ब्रह्मविष्णुरुद्राणां भेदमुत्तमभावतः। साधयेदुदरव्याधियुक्तो भवति मानवः' इति शातातपस्मृत्यादिवचनैः ब्रह्मादीनां तरतमभावस्य निन्दितत्वाच्च। अस्तु वा विशेषणतारतम्याद्विशेष्यस्यापि तारतम्यम्। तथापि नानुपपत्तिः, वक्ष्यमाणरीत्या विष्णुत्वशिवत्वोपाधिभूतविशेषणोत्कर्षप्रतिपादकवचनानां तुल्यतया विद्यमानत्वेन तयोस्तारतम्यस्य वक्तुमशक्यत्वात्। ननु 'यस्य मायागतं सत्त्वं शरीरं स्यात्तमोगुणः। संहाराय त्रिमूर्तीनां स रुद्रः स्यान्न चापरः॥ तथा यस्य तमः साक्षाच्छरीरं सात्त्विको गुणः। पालनाय त्रिमूर्तीनां स विष्णुः स्यान्न चापरः॥ रजो यस्य शरीरं स्यात्तदेवोत्पादनाय च। त्रिमूर्तीनां तु स ब्रह्मा भवेद्विप्रा न चापरः॥

अस्ति रुद्रस्य विप्रेन्द्रा अन्तः सत्त्वं बहिस्तमः । विष्णोरन्त-स्तमः सत्त्वं बहिरस्ति रजोगुणः ॥ अन्तर्बहिश्च विप्रेन्द्रा अस्ति तस्य प्रजापतेः । ततोऽपेक्ष्य गुणं सत्त्वं मनुष्या विव-दन्ति हि ॥ हरिः श्रेष्ठो हरः श्रेष्ठ इति हा मोहवैभवम् । सत्त्वाभावात्प्रजानाथं वरिष्ठं नैव मन्यते' इत्यादिस्कान्दवचन-पर्यालोचनया यत्र यत्र सात्त्विकत्वेन विष्णूत्कर्षप्रतिपादकवच-नानि सन्ति, तान्युक्तरीत्या पालनादिगुणपरत्वपराणीत्यभ्युप-गन्तव्यम् । यत्र यत्र तामसत्वेन शिवनिकर्षप्रतिपादकवच-नानि सन्ति, तान्युक्तरीत्या संहारादिगुणपरत्वपराणीत्यभ्युपग-न्तव्यम् । ततश्च विष्णुत्वशिवत्वोपाधिद्वयतारतम्यविचारे तमो-गुणोपाधिकविष्णवपेक्षया सत्त्वगुणोपाधिकशिवस्योत्कर्षः स्यादि-ति चेत्, नैवम् । 'सत्त्वं रजस्तम इति...सत्त्वतनोर्नृणां स्युः' इत्यादिभागवतवचनेऽपि सत्त्वं रजस्तम इत्यादिना प्रकृ-तिस्वरूपसत्त्वादिगुणत्रयमुपक्रम्य 'तैर्युक्तः...संज्ञाम्' इत्या-दिना एक एव मायोपहितः सत्त्वादिगुणत्रययुक्तः सन् स्थि-त्युत्पत्तिसंहारव्यापारार्थं क्रमेण विष्णुब्रह्मशिवसंज्ञां लभत इति प्रतिपाद्य 'सत्त्वतनोर्नृणां स्युः' इत्यादिना सत्त्वमयविग्र-हविशिष्टस्य विष्णोः सर्वातिशयज्ञापनात् सत्त्वरजस्तमो-गुणत्रयक्रमेण प्राप्तप्रायपाठानुरोधेन रजस्तमोमयविग्रहविशि-

ष्टयोः ब्रह्मशिवयोः निकृष्टोपाधिकत्वात् निकर्षस्यावश्यमङ्गी-
कर्तव्यत्वेन सत्त्वोपाधिकविष्णूत्कर्षाङ्गीकारस्यापि तुल्यत्वात् ।
न च भागवतादिपुराणानां विष्णुपारम्यैदंपर्येण प्रवृत्तत्वेन
तत्प्रकरणे न हि निन्दान्यायेन तामसविग्रहविशिष्टशिवनिक-
र्षोपपादनस्य विष्णुप्रशंसापरत्वादिति वाच्यम् । स्कान्दादिपु-
राणानामपि शिवपारम्यैदंपर्येण प्रवृत्तत्वेन तत्प्रकरणेऽपि न
हि निन्दान्यायेन तामसविग्रहविशिष्टविष्णुनिकर्षोपपादनस्य
शिवप्रशंसापरत्वाविशेषात् । ननु भागवतादिषु तामसवि-
ग्रहविशिष्टत्वेन प्रतिपाद्यमानस्य शिवनिकर्षस्य 'कालमेघ-
समच्छायः कन्थाशूलकपालधृत् । तेषामाविरभूच्छंभुः स्मय-
मानमुखाम्बुजः' इत्यादि ब्रह्माण्डपुराणवचनमनुसृत्य शिव-
स्यावस्थान्तरपरिगृहीतनीलविग्रहविशिष्टत्वेन चरितार्थतया 'शु-
द्धस्फटिकसंकाशं चन्द्रलेखावतंसकम् । त्रिलोचनं चतुर्बाहुं
नीलग्रीवं परात्परम् । ध्यायेन्नित्यं सदा सोऽहमिति ब्रह्म-
विदां वर' इत्यादि स्कान्दवचनपर्यालोचनया स्वाभावि-
कश्वेतविग्रहप्रयुक्तातिशयस्य सिद्धत्वादिति चेत्, न । स्का-
न्दादिपुराणेष्वपि तामसविग्रहविशिष्टत्वेन प्रतिपाद्यमानस्य वि-
ष्णुनिकर्षस्य 'आलोलतुलसीमालमारूढविनतासुतम् । ज्योति-
रिन्दीवरश्याममाविरस्तु ममाग्रतः' इत्यादिपुराणवचनमनुसृत्य

विष्णोरवसरान्तरपरिगृहीतनीलविग्रहविशिष्टत्वेन चरितार्थतया 'गोक्षीराभं पुण्डरीकायताक्षं चक्राब्जाढ्यं भूषणैर्भूषिताङ्गम् । श्रीभूमिभ्यामर्चितं योगपीठे ध्यायेद्देवं पूजयेत्पौरुषेण' इत्यादि बहुप्रमाणैः पुरुषसूक्तध्येयपुरुषवासुदेवनृसिंहध्यानादिषु स्वाभाविकश्वेतविग्रहपरिग्रहप्रयुक्तातिशयस्य तुल्यत्वात् । प्रत्युत स्कान्दभागवतवचनतात्पर्यपर्यालोचनया अन्तः सत्त्वबहिस्तम उपाधिविशिष्टशिवापेक्षया बाह्याभ्यन्तरसत्त्वोपाधिविशिष्टविष्णूत्कर्षस्यैव प्रतीयमानत्वात् ॥

यदि 'अष्टमूर्तिरनेकात्मा सात्त्विकः शुद्धविग्रहः' इति अगस्त्योक्तशिवरहस्यवचनबलेन शिवस्यापि बाह्याभ्यन्तरसत्त्वगुणोपाधिविशिष्टत्वमस्त्वित्युच्येत, तर्हि पूर्वोक्तरीत्या विष्णुशिवयोर्विशेषणतारतम्यप्रतिपादकवचनानां तुल्यत्वेन हरिहरयोः साम्यापत्त्या अस्मदिष्टसिद्धिः ॥

न च उपधेयवदुपाधीनामप्यैकरूप्ये विष्णुरुद्रादिभेदव्यवहारो नोपपद्यत इति वाच्यम्, लक्ष्मीपतित्वपार्वतीपतित्वादिविशिष्टविग्रहेण वा स्थित्यादिरूपव्यापारेण वा विष्णुरुद्रादिसंज्ञाभेदप्रयोजकव्यवहारस्य व्यवस्थितत्वात् ॥

नन्वेवं सति बाह्याभ्यन्तरसत्त्वोपाधिवशात्तुल्यत्वेन प्रतिपाद्यमानविष्णुशिवापेक्षया 'रजो यस्य शरीरं स्यात्तदेवोत्पादनाय

च । त्रिमूर्तीनां तु स ब्रह्मा भवेद्विप्रा न चापरः' इत्यादि पूर्वोदाहृतवचनरीत्या ब्रह्मणः सत्त्वसंबन्धमन्तरा बाह्याभ्यन्तररजोगुणविशिष्टत्वेन तस्य निकर्षापत्तिरिति चेत्, न; तुरीयशिवस्यापि गुणसाम्यावस्थप्रकृत्युपाधिविशिष्टत्वेन हरिहरयोरिव केवलसत्त्वोपाधिविशिष्टत्वाभावेन रजस्तमोगुणशबलितसत्त्वोपाधिप्रयुक्तनिकर्षस्य केनापि अनिवार्यत्वात्। न च बाह्याभ्यन्तररजोगुणोपाधिविशिष्टत्वाद्ब्रह्मणः सत्त्वगुणसंबन्धलेशाभावेन ब्रह्मापेक्षया गुणत्रयाविशिष्टोपाधिकस्य तुरीयशिवस्य सत्त्वसंबन्धप्रयुक्तातिशयस्य वक्तुमुचितत्वादिति वाच्यम् । गुणत्रयविशिष्टस्य तुरीयशिवस्य तमोगुणप्रयुक्तनिकर्षस्यैवावश्यंभावेन तुरीयशिवापेक्षया ब्रह्मणस्तमोगुणप्रयुक्तमालिन्याभावेन तस्याप्युत्कृष्टत्वेन वक्तव्यत्वात् । न चेष्टापत्तिः । तुरीयशिववादिभिः व्यष्टिगुणोपाधिकत्रिमूर्त्यपेक्षया गुणत्रयसमष्टिविशिष्टतुरीयशिवोत्कर्षस्यैवाङ्गीकारात् । तस्माद्विशेषणतारतम्याङ्गीकारानङ्गीकारपक्षयोरपि वशीकृतमायत्वानावृतचैतन्यत्वादेरीश्वरकोटिप्रविष्टानां ब्रह्मादित्रिमूर्तीनां मायोपहितविशेष्यस्वरूपनिष्ठत्वेन तत्र तारतम्योक्तिरयुक्ता । एवं च उक्तरीत्या तेषां ब्रह्मादीनां तरतमभावस्य बाधितत्वेन उदाहृतस्कान्दवचनानां न ब्रह्मादित्रिमूर्तितारतम्यप्रतिपादने तात्पर्यम् ।

किं तु, 'अथातः संप्रवक्ष्यामि परात्परतरं पदम् । ततोऽधिकं परं तत्त्वं ज्ञानमानन्दमद्वयम्' इत्याद्युपक्रमोपसंहारपर्यालोचनया निष्कृष्टरूपेण निर्विशेषब्रह्मप्रतिपादन एव तात्पर्यमित्यवगन्तव्यम् ॥

यदुक्तं विशिष्टं पदार्थान्तरमिति कृत्वा प्रमाणबलादुमार्धविग्रहविशिष्टस्यैवाधिक्यमुच्यत इति, तदपि नोपपद्यते । विष्णुशिवप्रतिपादकेषु सकलश्रुतिस्मृतिपुराणादिषु मुमुक्षूपास्यत्वज्ञानप्रदातृत्वादीनामुभयसाधारणत्वप्रतिपादनेन तयोस्तारतम्यकल्पनमयुक्तमित्यस्य वक्ष्यमाणत्वात् । नन्वेवमपि 'यो ब्रह्माणं विदधाति पूर्वं ... प्रपद्ये,' 'उमासहायं ... परस्तात्' इत्यादिश्रुतिभिः परमशिवस्य मुमुक्षूपास्यत्वप्रतिपादनात् तस्य मोक्षप्रदातृत्वेन उत्कर्षः स्यादिति चेत्, सत्यम् । 'क्षीरोदार्णवशायिनं नृकेसरिविग्रहं योगिध्येयं परं पदं साम जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति' 'अथ कस्मादुच्यते नमामीति यस्माद्यं सर्वे देवा नमन्ति मुमुक्षवो ब्रह्मवादिनश्च' 'आत्मैव नृसिंहो देवो ब्रह्म भवति । य एवं वेद । सोऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते । ब्रह्मैव सन्ब्रह्माप्येति' इत्यादिनृसिंहतापनीयश्रुत्या 'सदा रामोऽहमित्येव तत्त्वतः प्रवदन्ति ये । न ते

संसारिणो नूनं राम एव न संशयः ॥ राम एव सुविज्ञेयः सत्यानन्दश्चिदात्मकः । नमः पदं सुविज्ञेयं पूर्णानन्दैकविग्रहम् ॥ सदा नमन्ति हृदये सर्वे देवा मुमुक्षवः' इत्यादिरामतापनीयश्रुत्या 'सत्पुण्डरीकनयनं मेघाभं वैद्युताम्बरम् । द्विभुजं वेणुमुद्राढ्यं वनमालिनमीश्वरम् । गोपगोपाङ्गनोपेतं सुरद्रुमलताश्रयम् ॥ दिव्यालंकरणोपेतं रक्तपङ्कजमध्यगम् । कालिन्दीजलकल्लोलसङ्गिमारुतसेवितम् ॥ चिन्तयन् चेतसा कृष्णं मुक्तो भवति संसृतेः । कृष्ण एकोऽपि सन् बहुधा यो विभाति । तं पीठस्थं ये तु यजन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् ॥ नित्यो नित्यश्चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् । तं पीठस्थं ये नु यजन्ति विप्रास्तेषां सिद्धिः शाश्वती नेतरेषां ॥ यो ब्रह्माणं विदधाति पूर्वं यो वै विद्यास्तस्मै गोपयति गायति स्म कृष्णः । तं देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणममुं व्रजेत् । गोपालोऽहमिति भावयेत् स मोक्षमश्नुते स ब्रह्मत्वमधिगच्छति स ब्रह्मविद्भवति' इत्यादि गोपालतापनीयश्रुत्या 'शुद्धो देव एको नारायणो न द्वितीयोऽस्ति कश्चित् । य एवं वेद स विष्णुरेव भवति स विष्णुरेव भवति' इत्यादि नारायणोपनिषद्वचनेन 'अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् । परं भावमजानन्तो मम भूतमहेश्वरम् ॥ मोघाशा

मोघकर्माणो मोघज्ञाना विचेतसः । राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ॥ महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥ सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः । नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते' इत्यादिभगवद्गीतावचनैश्च विष्णोरपि मुमुक्षूपास्यत्वप्रतिपादनेन मोक्षप्रदातृत्वस्य सिद्धत्वात् ॥ न च 'संसारमोचकः साक्षाच्छिव एव न चापरः । अन्याश्च देवताः सर्वाः प्रणाड्यैव तु मोचकाः' इत्यादि स्कान्दवचनानुरोधेन परमाशिवस्य साक्षान्मोक्षसाधनत्वम्, विष्ण्वाद्युपासनस्य प्रणाड्या मोक्षसाधनत्वमिति वाच्यम् । 'दैवी ह्येषा गुणमयी मम माया दुरत्यया । मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥ न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः । माययापहृतज्ञाना आसुरं भावमाश्रिताः' 'कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः' 'मद्भक्ता यान्ति मामपि' 'ओमित्येकाक्षरं ब्रह्म' 'पुनर्जन्म न विद्यते' इत्यादि भगवद्गीतावचनानुसारेण विष्णूपासनस्यैव साक्षान्मोक्षसाधनत्वम् । शिवाद्युपासनस्य प्रणाड्या अर्थसाधनत्वमित्यर्थस्याविशिष्टत्वात् । 'ब्रह्मविदाप्नोति परम्' 'ब्रह्मविद्ब्रह्मैव भवति' 'नान्यः पन्था विद्यतेऽयनाय' इत्यादिप्रबलश्रुतिभिः ज्ञानस्यैव साक्षान्मोक्षसाधनत्वावगमेनोपासनामात्रस्य प्र-

णाढ्या मोक्षसाधनत्वमित्यर्थस्यैव वक्तव्यत्वाच्च ॥

नन्वेवमपि 'यां यां मूर्तिं समाश्रित्य ब्रह्मभावनया जनाः । आराधयन्ति ते सर्वे क्रमाज्जानन्ति शंकरम् ॥ रुद्रस्य मूर्तिमाराध्य प्रसादात्कामवर्जिताः । अयत्नेनैव जानन्ति शिवं सर्वत्र संस्थितम्' इत्यादिस्कान्दवचनानुरोधेन शिवोपासनस्यैव साक्षाज्ज्ञानसाधकत्वम् । विष्णूपासनस्य शिवोपासनद्वारा ज्ञानसाधनत्वमिति चेत्, न; 'येषां त्वन्तगतं पापं जनानां पुण्यकर्मणाम् । ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः ॥ जरामरणमोक्षाय मामाश्रित्य यतन्ति ये । ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम् ॥ येऽप्यन्यदेवता भक्ता तत्त्वेनातश्च्यवन्ति ते' इत्यादिभगवद्वचनेन 'निराकृतत्वाच्छ्रुतियुक्तिमानतो यथेन्दुभेदो दशदिग्भ्रमादयः । यावन्नपश्येदखिलं मदात्मकं तावन्मदाराधनतत्परो भवेत् । श्रद्धालुरत्यूर्जितभक्तिलक्षणो यस्तस्य दृश्योऽहमहर्निशं हृदि ॥ रहस्यमेतच्छ्रुतिसारसंग्रहं मया विनिश्चित्य तवोदितं प्रियात्' इति श्रीरामवचनेन च, 'भास्करस्य तु यो भक्तः सप्तजन्मान्तरं नरः । तस्यैव तु प्रसादेन रुद्रभक्तिः प्रजायते ॥ शंकरस्य तु यो भक्तः सप्तजन्मान्तरं नरः । तस्यैव तु प्रसादेन विष्णुभक्तिः प्रजायते ॥ वासुदेवस्य यो भक्तः सप्तजन्मान्तरं नरः । तस्यैव तु प्रसादेन

वासुदेवे प्रलीयते' इत्यादि वामनपुराणानुसारेण च विष्णूपासनस्य साक्षाज्ज्ञानत्वम्, शिवाद्युपासनस्य तु विष्णूपासनद्वारा ज्ञानसाधनत्वमित्यर्थस्य तुल्यत्वात् ॥

न च 'त्वं देवेषु ब्राह्मणोऽस्यहं मनुष्येषु ब्राह्मणो ब्राह्मणो वै ब्राह्मणमुपधावत्युप त्वा धावामि' इति श्रुत्या शिवस्यैव ब्राह्मणोपास्यत्वं प्रतिपाद्यत इति वाच्यम्; पूर्वोदाहृतनृसिंहगोपालतापनीयादिश्रुतिभिः, 'किं पुनर्ब्राह्मणाः पुण्याः' इत्यादि भगवद्गीतावचनैश्च विष्णोरपि ब्राह्मणोपास्यत्वमित्यर्थस्य समानत्वात् । तस्मात् शिवस्य तुरीयमूर्त्यभ्युपगमेऽपि स्वेच्छाकल्पितसकलपरमेश्वरविग्रहेष्वनावृतचैतन्यत्वमुमुक्षूपास्यत्वज्ञानप्रदातृत्वादिविशिष्टपरमेश्वरस्यैकरूपतया विद्यमानत्वेन तत्र तरतमभावोक्तिरयुक्ता ॥

किं च यथा प्रमाणबलेन शिवस्य तुरीयमूर्तिरभ्युपगम्यते, तद्वदेव विष्णोरपि तुरीयमूर्तिरभ्युपगन्तुं शक्यते । न च विष्णोस्तुरीयमूर्तिसद्भावे प्रमाणाभाव इति वाच्यम् । 'एको ह वै नारायण आसीत् । तत एते व्यजायन्त विश्वे हिरण्यगर्भोऽग्निर्यमवरुणविष्णुरुद्रेन्द्राः' इत्यादि पैङ्गिरहस्यब्राह्मणेन 'नारायणं कारणपुरुषम्' इत्यादि नारायणोपनिषद्वचनेन च, 'जागरिते ब्रह्मा स्वप्ने विष्णुः सुषुप्तौ रुद्रस्तुरीयमक्षरं स आदित्यो विष्णु-

श्च शिवश्च' इत्यादि ब्रह्मोपनिषद्वचनेन, 'यो वै नृसिंहो देवो भगवान् यश्च ब्रह्मा यश्च विष्णुर्यश्च महेश्वरस्तस्मै वै नमो नमः' इत्यादि नृसिंहतापनीयोपनिषच्छ्रुत्या, 'यो वै श्रीरामचन्द्रः स भगवानद्वैतपरमानन्दो यो ब्रह्मा विष्णुरीश्वरस्तस्मै वै नमो नमः' इत्यादि रामतापनीयोपनिषच्छ्रुत्या, 'अर्धमात्रात्मकः कृष्णो यस्मिन्विश्वं प्रतिष्ठितम्। कृष्णात्मिका जगत्कर्त्री मूलप्रकृतिरुक्मिणी' इत्यादिगोपालतापनीयश्रुत्या च तुरीयनारायणनृसिंहश्रीरामगोपालानामपि प्रतिपादनात् ॥

न च उक्तपैङ्गिरहस्यब्राह्मणादिषु नारायणादीनां मायोपहितब्रह्माभेदाभिप्रायेण तत्र नारायणादिशब्दप्रयोग इति न तुरीयनारायणप्रतिपादनमिति वाच्यम्; अथर्वशिखादिष्वपि शिवस्य मायोपहितब्रह्माभेदाभिप्रायेण शंभुशिवादिप्रयोगोपपत्तेस्तुल्यत्वात्। यदि चाथर्वशिखादिषु विरोधाभावाज्जगत्कारणब्रह्मण एवोपासनार्थं शंभुशिवादिशब्देन तुरीयशिवमूर्तिः प्रतिपाद्यत इत्यभ्युपगम्यते, तर्हि पैङ्गिरहस्यब्राह्मणादिष्वपि विरोधाभावेन जगत्कारणब्रह्मण एवोपासनार्थं नारायणनृसिंहादिशब्दैस्तुरीयनारायणादिमूर्तयः प्रतिपाद्यन्त इति प्रकृतेऽपि दीयतां दृष्टिः। ततश्च उक्तसकलप्रमाणानामविरोधमिच्छद्भिरच्छमतिभिर्मात्सर्यमुत्सार्य 'चिज्जडानां तु यो द्रष्टा सोऽच्युतो ज्ञानवि-

ग्रहः । स एव हि महादेवः स एव हि महाहरिः ॥ यस्त्वां द्वेष्टि स मां द्वेष्टि यस्त्वामनु स मामनु । आवयोरन्तरं नास्ति शब्दैरर्थैर्जगत्पते ॥ नामानि तव गोविन्द यानि लोके महान्ति च । तान्येव मम नामानि नात्र कार्या विचारणा ॥ शिवाय विष्णुरूपाय शिवरूपाय विष्णवे । यथान्तरं न पश्यामि तथा मे स्वस्तिरायुषि' इत्यादिश्रुतिभारतस्कान्दादिबहुप्रमाणानुसारेण सकलवैदिकसंमतभगवत्पादाभिमतकेवलाद्वैतमार्गमेवानुसृत्य हरिहरयोरर्थतः शब्दतश्चाभेदमेवाङ्गीकृत्य विष्णूत्कर्षप्रतिपादकानां शिवोत्कर्षप्रतिपादकानां च सकलश्रुतिस्मृतीतिहासपुराणादीनामविरोधः समर्थनीयः । तस्मात्तुरीयमूर्त्यनभ्युपगमपक्षे ब्रह्मविष्णुरुद्रादिगुणमूर्तिष्वनुस्यूतः परमेश्वर एक एवेति नोपास्यदेवेषु तरतमभावकल्पना युज्यते । अन्यथा एकस्यैव परमेश्वरस्य तरतमभावाभ्युपगमे नानात्वापत्त्या यतो वेत्यादिकारणैकत्वबोधकश्रुतिविरोधापत्तेः प्रागेवोक्तत्वात् । किं च मन्त्रशास्त्रे ब्रह्मरुद्रविष्णुगौरीसरस्वतीलक्ष्म्यादीनामीश्वरभावं प्रतिपाद्य यथाभक्ति प्रधानतयोपासनविधानेन तच्छास्त्रविरोधापत्तिश्च । तदुक्तं मन्त्रशास्त्रे 'एकः सर्वेश्वरो भ्रान्त्या दृश्यते भिन्नवत्सदा । घटाकाशमठाकाशभेदेन तु यथा नभः ॥ भोगमोक्षप्रदो देवः परमात्मा जगन्मयः । नानोपास्यन्ति योगीन्द्रास्तमेवानन्दवि-

ग्रहम् ॥ महादेवो वासुदेवः शिवो विष्णुर्हरो हरिः । रुद्रो विरिञ्चिः पाकारिरित्येतैः शब्दितः पुमान् ॥ प्रकृतिर्मोहिनी विद्या दक्षकन्याद्रिजा रमा । वाणी रुद्राङ्गिरा काली गीस्तारा च जगत्प्रसूः ॥ गायत्री ब्रह्मविद्येति दैवतैका हि शब्दिता । एकमेव परं ब्रह्म पुंस्त्रीरूपविभागतः ॥ द्विधाभूतं तयोरेकमुपास्य सुखमाप्नुयात्' इति ॥

ननु ब्रह्मविष्णुरुद्राणामीश्वरकोटिप्रविष्टत्वे परस्परमुपास्योपासकभावप्रतिपादकश्रुतिस्मृतीतिहासपुराणादीनां का गतिरिति चेत्, उच्यते । 'मया प्रमाणं हि कृतं लोकस्तदनुवर्तते । न हि देयोऽस्ति कश्चिन्मे परः पाण्डवनन्दन ॥ इति संचिन्त्य मनसा पुराहं विश्वमीश्वरम् । पुत्रार्थमाराधितवानहमात्मानमात्मना' इति मोक्षधर्मे पार्थं प्रति भगवद्वचनेन अवाप्तसकलकामस्य श्रीकृष्णस्य शिवोपासनं लोकानुग्रहार्थमित्यभिगम्यते । अनेन न्यायेन शिवस्यापि क्वचिद्विष्णूपासनं लोकानुग्रहार्थमित्येव सिद्धम् । ततश्च शिवविष्ण्वादिपरस्परोपासनप्रतिपादकवचनानां सर्वेषां तादृशप्रतिपादनद्वारा तत्तन्मूर्त्युपासनावश्यकर्तव्यतापरत्वमेव । इतरथा ईश्वरकोटिप्रविष्टानां ब्रह्मादीनां स्वयोजनार्थमेव परस्परोपासनमित्यभ्युपगमे परमेश्वरस्य नित्यमुक्तत्वापहतपाप्मत्वादिविरोधापत्तेः ॥

नन्वेवं सति शिवतत्त्वविवेकब्रह्मतर्कस्तवादिग्रन्थेषु विष्णोः शिवापेक्षया निकर्षप्रतिपादनदर्शनेन रामाद्यवतारेषु कौसल्यादिगर्भवासशोकमोहादिजीवलिङ्गदर्शनेन च विष्णोर्जीवभाव एव तदभिमत इति प्रतीतेस्तद्विरोधप्रसङ्गः इति चेत्, न। तद्ग्रन्थकर्तृभिरप्पय्यदीक्षितचरणैः प्रतिवादिनिराकरणाय विष्णोः शिवापेक्षया निकर्षप्रतिपादनेऽपि वस्तुतस्तत्र तात्पर्याभावेन तत्प्रतिपादनस्य नहिनिन्दान्यायेन शिवोपासनावश्यकर्तव्यतापरत्वात्। अत एव तैरेवोक्तं मध्वमतविध्वंसने-- 'शिवं वा विष्णुं वा यद्यभिदधति शास्त्रस्य विषयं तदिष्टं ग्राह्यं नः सगुणमपि तद्ब्रह्म भजताम्। विरोधो नातीव स्फुरति नहिनिन्दानयविदां न सूत्राणामर्थान्तरमपि भवद्वाक्यमुचितम्' ॥ शिवकर्णामृतेऽपि--'यत्तु नारायणपरं ब्रह्मेति तदपि नारायणस्य शिवाभेदपक्षे न किंचिद्विरुध्यते, भेदपक्षे तु नारायणस्य परब्रह्मभावनासिद्धतद्भावोपवर्णनतया ज्ञेयम्' इति ॥ शिवानन्दलहर्यां सिद्धान्तलेशसंग्रहेऽपि 'न च परमेश्वरस्य रघुनाथाद्यवतारे तपस्वित्वदुःखसंसर्गादिश्रवणान्मुक्तानामीश्वरभावे पुनर्बन्धापत्तिः। तस्य विप्रशापामोघत्वादिस्वकृतमर्यादापरिपालनाय कथंचिद्भृगुशापादिसत्यत्वं प्रत्याययितुं नरवदीश्वरस्य तदभिनयमात्रपरत्वात्। अन्यथा तस्य नित्यमुक्तत्वनिरवग्रहस्वातन्त्र्यसमा-

भ्यधिकराद्धित्यादिश्रुतिविरोधात्' इति। तस्माद्व्यासाभिमतकेवलाद्वैतरूपसच्चिदानन्दाखण्डनिर्विशेषपरब्रह्मण एव मायोपहितामूर्तरूपेण जगज्जन्मादिकारणत्वरूपेण ब्रह्मविष्णुरुद्ररामकृष्णादिरूपेण च मुमुक्षूपास्यत्वं तत्प्रसादादेव ब्रह्मज्ञानप्राप्तिश्चेति सर्वं रमणीयम् ॥

व्यासतात्पर्यनिर्णायिपूर्णचन्द्रप्रभामिमाम्।
समास्वाद्याभिनन्दन्तु सन्मनीषिचकोरकाः ॥

बादरायणसिद्धान्तकेवलाद्वैतडिण्डिमः।
उद्घोष्यतां स विद्वद्भिर्हृद्भेदे भेदवादिनाम् ॥

इति श्रीमद्वेदान्तसिद्धान्तरहस्यार्थप्रकाशनधुरंधरेण
श्रीमदय्यण्णदीक्षितेन विरचितः
व्यासतात्पर्यनिर्णयः
समाप्तः ॥



